# श्रीनारायणकाव्यम्।

श्रीमन्महर्षिगौतमवंशावतंसपदवाक्यप्र-
माणपारावारीणद्विवेदोपाह्व श्रीमत्प्रया-
गदत्तशर्म्मात्मजानाम् पण्डितवरश्रीहरि-
दत्तशर्म्मणाम् तनूजैःशिष्यैश्च पण्डितवर
श्रीमदुमापतिशर्म्मभिर् लोकप्रसिद्ध
श्रीनकछेदरामशर्म्मभिर्
विरचितम्।

श्रीमत्त्रिपाठ्युपनामक-पण्डित-
चन्द्रचारुमणिशर्म्मणाम्
आज्ञानुसारेण
तच्छिष्य-पाण्डेयोपाह्व-विन्ध्येश्वरीप्रसाद-
शर्म्मणा महता परिश्रमेण

काश्याम्।
मेडिकल-हाल-नाम्नि-यन्त्रे मुद्रामापितम्।
संवत् १९५३ फाल्गुन शुक्ल त्रयोदश्याम् १६ मार्च सन् १८९७ ई०।

प्रथम बारम् १०००।] [विनामूल्येन वितरणीयम्।

# अथ नारायणकाव्यम् ।



नारायणीयचरणा, पूर्णप्रेमणिकार्मणाम् ।
रूपनारायणमणि, शर्मणां पुण्यकर्मणाम् ॥ १ ॥
काव्यं नारायण मिदं, मन्वीक्षातीर्थगौतममहर्षेः ।
वंश्य उमापतिशर्म्मा, ऽररचं नकच्छेदरामो ऽहम् ॥ २ ॥
साष्टाङ्गं प्रणमञ् श्रद्, धया ऽर्थये वाचि तत्र भवतो ऽत्र ।
क्षिप्त्वा कृपाकटाक्षान्, सफलयत मम श्रमं सुधियः ॥ ३ ॥
लाजरसीयां मुद्रांगमित, मिदं चन्द्रचारुमणिनाऽद्य ।
दातु ममूल्यं बिक्रम, बर्षे त्रीष्वङ्कचन्दमिते ॥ ४ ॥



श्रीमत्त्रिपाठ्युपनामक पण्डित-
चन्द्रचारुमणिशर्म्मणाम्
आज्ञानुसारेण
तच्छिष्य पाण्डेयोपाह्व बिन्ध्येश्वरीप्रसाद-
शर्म्मणा महता परिश्रमेण



काश्याम् ।
मेडिकल्-हाल् नाम्नि यन्त्रे मुद्रामापितम् ।
संवत् १९५३ फाल्गुन शुक्लत्रयोदश्याम् १६ मार्च सन् १८९७ ई० ।

# नारायणकाव्यस्य सूचीपत्त्रम् ।

# शुद्धिपत्त्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १ | नीत्योन्नतम् | नीत्योन्नतं |
| ९ | ७ | पूरणम् | पूरणं |
| ९ | १६ | नाश्नां | नाश्नं |
| ११ | ९ | रुजम् | रुजं |
| १३ | १२ | प्यहम् पूर्बिकया | प्यहम्पूर्बिकया |
| २६ | १० | रुप | रूप |
| २७ | १८ | हन्त्यर्भकां | हन्त्यर्भकान् |
| ३३ | ८ | चाहम् पूर्बिको | चाहम्पूर्बिको |
| ४१ | ४ | कटुद्वाहा | कदुद्वाहा |
| ४५ | १४ | नारून्तुदा | नारुन्तुदा |
| ४८ | १३ | भ्राणां,गर्भस्यन् निर | भ्रेण, गर्भकृतम |
| ५४ | १३ | शङ्क्रान्त | सङ्क्रान्त |
| ७० | २० | कृपा कलितं | कृपाकलितं |
| ७२ | ३ | बिरसजं | बिरहजं |
| ७२ | १२ | एष | एषु |
| ७३ | ८ | सायधीत्य | साऽधीत्य |
| ७४ | ४ | बध्यापिपच् | वध्यापिपं |
| ७४ | ९ | वदान्य | वदान्या |

# नारायणम् काव्यम् ।

श्रीगणेशाय नमः ।



श्रीमन् नीलनवीननीरजनिभम् मीनादिनीत्योन्नतम्
लीलोन्मीलितपीनलीनभुवनं श्रीजानकीजीवनम् ।
नम्रान् यस्य जनान् बिमुक्तिरपि तन्नाम्नैव नन्नम्यते
चिन्मुन्मैत्र्यमयं सनत् प्रणिपनीपत्ये रसाख्यं महः॥१॥

यदात्मनः श्रुत्यनुमानभावना
बिभूतिसाक्षात्क्रियया क्रियामुषः ।
न वैभवं वै भवति स्थितङ् कथा-
पथेऽपि पाथोजभुवाम् परस्य किम् ॥ २ ॥

न यत् प्रमित्सोरपि संशयेशयम्
बिपर्य्ययाभावमिती न बा स्पृशात् ।
परिस्फुरत् स्फारयदप्यनेकशस्
तथापि गीतं निगमैर्गुहाशयम् ॥ ३ ॥

यतश्च च सञ्चित्य चितम् बितन्वते
हृषीकपूगा निखिला जगद्गतीः ।
लये ऽत्र तस्या अपियन्ति सत्वरं
घना घनान्ते ऽम्बु सरित्पतेरिव ॥ ४ ॥

पुरः पुरो यस्य च योनिमण्डपे-
ष्वसंख्यलास्या असुभृन्नटाः किल ।
निराकृतास् तेन ततो ऽपि तुष्यता,
तदेव बिन्दन्ति न पारितोषिकम् ॥ ५ ॥

इहैव तेजस्यकलङ्ककज्जले,
बलत्कले ऽनस्तमये मयेप्सिते ।
अचञ्चले भिच्छलभैस् सुदुर्लभे
लभेत यो लेपमसौ न लिप्यते ॥ ६ ॥

न यत्र तापो न तुषारशीकरा,
नचोपशाया अपि मातरिश्वनाम् ।
बिभान्ति संसारसरस्वदूर्मयः,
परं रवेर् धाम्नि मरीचिका इव ॥ ७ ॥

दया न या भिन्ननया नचेप्सया
नचाप्युपाधे रुपधिस्पृग व्यया ।
बिचित्र मेषाऽपि यदात्मिका सती,
गतेव सायुज्य मिहा नुभूयते ॥ ८ ॥

अवाप्य लेशानिव योगिनो यतो,
जगन्ति शर्म्मोर्मिमयानि कुर्व्वते ।
ययैव वेदो ऽप्युदभावि कर्मणाम्
बिधेर् निषेधस्य च बोधसिद्धये ॥ ९ ॥

दशाविशेषान् क्रमतो मतोचितान्,
प्रकृत्य चा पोद्य च यद् विलक्षवती ।
मिथो मतानां दधती समन्वयं
श्रुतिर् विरोधोपनतिं निकृन्तति ॥ १० ॥

मनांसि सर्वाणि वचांसि वा गम-
ङ्गमं दवीयांसि यतः पतन्त्यधः ।
सतीव पत्युः श्रुतिर प्यनन्यभा-
गतद्भिदैवेह तनोति यद्धियम् ॥ ११ ॥

द्रुमस्य शाखेव सुधांशुमण्डलं
वशिष्ठतारेव तनू मरुन्धतीम् ।
प्रदर्श्यते लक्षयितुं सुरावलिर्
विशिष्य यच्चोपनिषद्भि रादरात् ॥ १२ ॥

विधिस्वभूशर्वतनू रनूत्थितिं
स्थितिं प्रतिप्रस्थिति मत्र संसृतेः ।
अधिस्वमायं प्रवितत्य यत् स्थितं
सदा ऽनुबिम्बानिव बिम्बमम्बुनि ॥ १३ ॥

अवच्छिदानां तिसृणा मनेहसा
स्थलेन धर्मेण च निर्मितात्मनाम् ।
अभावरूपं यदनादि बिभ्वपि
द्वितीयशून्यम् व्यपदिश्यते बुधैः ॥ १४ ॥

चकास्ति यस्मिन् निजसौख्यलालसा-
वदन्यता ऽनन्यतया ऽङ्गशब्दभूः ।
उमेव गङ्गां बहिरङ्गताधिया
सदा सपत्नीम् प्रकृतिं हसत्यसौ ॥ १५ ॥

परानधीनत्वतनुः स्वतन्त्रता
यदात्मिका शक्तिगता ऽप्यनन्तता ।
बिहाय भेदं बिनयेन जागृतः
सनात् सपत्न्याविव यत्पतिव्रते ॥ १६ ॥

अनादिताशक्तिबिरामशून्यता-
समस्तवस्तुप्रचयावगाहिताः ।
बिभान्ति यस्मिन् नतु यन्ति तद्भिदां
शिखाइवाग्नावुदधाविवोर्म्मयः ॥ १७ ॥

बिरागिता चेतनता तपस्विता,
क्षमा धृतिश्च चेश्वरता ऽपि सत्यता ।
अधिष्ठितिः सृष्टि रथात्मबेदिता
यदात्मकत्वेन बियन्ति नो दश ॥ १८ ॥

न यद् बिना किञ्चन चिन्निकेतनं
न यद् बिनाऽऽत्मान मुपैति चेतनम् ।
अलं प्रशस्यापि बिनार्थबर्णनं
बिना यदाप्नोति धिया ऽवचूर्णनम् ॥ १९ ॥

निदर्शनं सङ्गमवाप्य दर्शना-
दुपाधि मुद्भाव्य भवानुबन्धिताम् ।
न यत्र भक्ते रपि रागताभृतो
ऽनुमीयते बुद्धिमता ऽपि हेयता ॥ २० ॥

निरुक्तिमार्गान्तगरूपवैभवा
भवाप्ययोपायगुणत्रयात्मिका ।
यदीयमाया त्रिविधा ऽस्ति भारती
रमा ऽम्बिकेति व्यपदेशशालिनी ॥ २१ ॥

अतर्क्यरूपा रचना इमाः क्षणं
क्षणं निरायासमसौ प्रसूयते ।
तथैहिकामुष्मिकसौख्यदुःखयोर्
व्यवस्थितिं सम्बिदधात्यसङ्कराम् ॥ २२ ॥

इयं च मायाविनि लौकिकी यथा
न यत्र कर्त्तुं क्षमते ऽपि विक्रियाम् ।
परं तु लोकान् भ्रमय त्यनादि ये
तदात्मकत्वम् भ्रमतो न बिभ्रति ॥ २३ ॥

इमां तु केचित् प्रकृतिम् परे ऽम्बिकाम्
बिदन्त्यबिद्यामपि केचन र्षयः ।
सहक्रियाशक्तिमपीतरे परं
नको ऽपि चैना मथ बेद यद् बिना ॥ २४ ॥

बदन्त्यवच्छेदकरूपिणी मिमां
स्वरूपसम्बन्धविशेष मेव वा ।
बुधाः पदार्थान्तरमेव केचन
प्रतीतिसिद्धाम् प्रतियोगितामिव ॥ २५ ॥

यथैकसम्बिद् बिषयत्वयोः सम-
स्ययोर् भिदां कल्पितसत्यसङ्करात् ।
बुधा न निश्चिन्वत एवमेव यत्-
परेशयो राश्रयशून्ययोरपि ॥ २६ ॥

अमुष्य सम्बन्धविशेषनिर्णयम्
बिनैव चेमां निपुणा बिचक्षणाः ।
भणन्ति दैवीं सुबिमृश्य चन्द्रिकां
यथैव कोशाः कुमुदस्य कौमुदीम् ॥ २७ ॥

चरित्र मस्या जगदेकपावनं
सुकर्मणान्धारणमातृका यतः ।
अचिन्त्यमाश्चर्य्यमयं चराचरं
सृजन्त्यसौ यस्य च यन्त्रमातृका ॥ २८ ॥

कुलकम् । उपाध्यपायं न बिना भ्रमक्षयो
यथा ऽरुणस्य स्फटिके जपाजुषः ।
स तुष्यतः स्याद् बिभुतः स तोष्यते
स्वयैव भक्त्येति भवेदसौ परा ॥ २९ ॥

न नामरूपाकृतिकर्मवर्जिते
प्ररोढु मेषा प्रभवेन् मनागपि ।
धृते ऽवतारे तु दृढीभवेदियम्,
तदादृतासु प्रतिमास्वपि स्वयम् ॥ ३० ॥

कथं चलत्यन्ध इति स्वलोचने
चलन् निमील्याध्वधृतामपि श्रियम् ।
यथैव कश्चिन् निजवञ्चकस् तथा
न यस्त्विदं वेत्स्यति सो ऽपरात्स्यति॥ ३१ ॥

मम त्वभिज्ञा मम भक्तिमात्रतो
मयैव गीतास्वपि वक्ष्यतेतराम् ।
खलैर् बुधम्मन्यतमैर् दुरुन्नयं
नवैः प्रमायैतदृतं दयादिभिः ॥ ३२ ॥

समीक्ष्य संसारदशानुशायिनाम्
बहूनि दुःखानि निराचिकीर्षु यत् ।
बिभर्ति कायान् निजयोगमायया
नयेन मीनप्रभृतीननेकशः ॥ ३३ ॥ इति कुलकम् ॥

अलिङ्गता मस्य तु युष्मदस्मदो-
रिव ब्रुवन्ति प्रथमे विपश्चितः ।
समस्तलिङ्गाञ्जनभञ्जनाशयाः
परोक्षवाचो हि विचक्षणोत्तमाः ॥ ३४ ॥

तदेव लोके जगदीश्वरः स्मृतं
तदेव तत्त्वं निजमायया ऽऽवृतम् ।
न तत्समः कोप्यधिकस्य का कथा
पथां समेषामपि सो ऽन्तिमो ऽवधिः ॥३५॥
विसृष्टि रस्यैव महत्वदादयः,
श्रुता मखानामिव पूर्तिमूर्तयः ।
लसन्त्वसङ्ख्या भवभीतिभेषजम्
भणन्ति मीनादिगुणेरणां यथा ॥ ३६ ॥

॥ अथ दशावतारश्लेषः ॥

समायमीनोमृतमग्नबेदमुद्,
दधार नानायनयो युगत्त्रये ।
मनुप्रमेयो नपवित्रकाश्रयो
मिलत्कुवेण्याः परिपर्य्यभिस्फुरन् ॥ ३७ ॥
क्षितिप्रतिष्ठापनचुञ्चुराञ्चिचद्
बराहमाकारिणमप्यनाकृतिः ।
स एव संसाधितपूर्बदेवता
भृदव्ययो यज्ञसमज्ञया स्तुतः ॥ ३८ ॥
स्फुटो ऽभवत् स्तम्भभिदा ऽभिनन्दयन्
हिरण्यनाशेन निजानुरागिणः ।
जगत्यनैकान्तिकता यतो गिरा-
मगोचरत्वं च नृसिंहबेदितम् ॥ ३९ ॥

भवाब्धिमायामयकच्छपाकृतिं
स्वभक्ततामन्दरधारणोद्धुराम् ।
बिधाय रक्षानमृतं स आश्विशत्
निदर्शयन् कण्ठमणीनतत् स्मृतान् ॥ ४० ॥

नबामनोऽतिष्ठिपदात्मगोचरे
बलिच्छलं किन्तु सपाकशासनम् ।
नयादकार्षीच्छतमन्युपूरणम्
रसातलेचास्थितनित्यदर्शनम् ॥ ४१ ॥

बली बलत्कालकुठारधारया
प्रवृत्तकृत्तार्जुनबर्य्यबर्णकः ।
नरेणुकायान् न जिगाय शङ्करः
प्रियङ्करो यस्य स रामसञ्ज्ञकः ॥ ४२ ॥

स दाशरथ्ये च समुद्रदुर्मद-
च्छिदी स्म धत्ते ऽपि बिदेहजश्रियौ ।
बभार सुग्रीवबिभीषणौ समं
दशास्यनाशां बिदधार नोनबा ॥ ४३ ॥

स बासुदेवो ऽपि बिराजमात्मनि
प्रदर्शयन् भूमिभरम् ब्यनीनशत् ।
सुदर्शनस्थानमनन्दको न सन्
न पाञ्चजन्यं न यतो बिनाकृतम् ॥ ४४ ॥

सबासुदेवो ऽप्यबिभर् भुवं भरम्
प्रभावतः सम्परिभूय बैजयात् ।
सुदर्शनप्रक्रमणादपि स्वयं
निरर्गलैश्वर्य्यमयः श्रियो गृहम् ॥ ४५ ॥
यथा गतो ऽयन् निगमैस् तथागतो
न्यबीवृतत् तान् दयया पशुद्रुहः ।
बिधिं दधत् पुण्यजनानुगां स्मरम्
ब्यजेष्ट तं यन् निरचेष्ट यं बुधः ॥ ४६ ॥
वशं वदो यस्य स मीनकेतनः
स बुद्ध एवं भगवान् प्रकाशयन् ।
दयामयं स्वं निगमान् पशुद्रुहः
प्रशिन्ध्य चिन्मात्र मचीचितज्जनान् ॥ ४७ ॥
जनेषु कल्के रस इत्ययं स्वयं
सुसम्भलग्रामसुगानकीर्तिभृत् ।
भृशं कषन् म्लेच्छनमच्छरीतितः
कलिं बिलुप्यातनुतेतरां कृतम् ॥ ४८ ॥
॥ इति दशावतारश्लेषः ॥
दशाकृतेरस्य कथा सुरापगा
सुदिव्यवाग्बेदितसीमशून्यता ।
सकृद्विगाढा ऽपि पुनाति शाश्वतम्
बिमोक्षदत्ता निखिलं चराचरम् ॥ ४९ ॥

इमं च मुष्णाति न यः स बध्यते
जनो विमुष्णन् नचिराद् विमुच्यते ।
समृद्ध आदिष्य् चरमस् त्वकिञ्चनस्
ततो ऽयमाश्चर्य्यमयो हिरण्मयः ॥ ५० ॥

अमुष्यभक्तिं मधु ये पिवन्त्यहो
विशुद्धविज्ञानघना भवन्ति ते ।
पतन्ति मुह्यन्ति न तल् लिहन्ति ये
तदद्भुतं ध्यायत मध्विदं बुधाः ॥ ५१ ॥

स्वभक्तिमध्वभ्यसनोद्भवां रुजम्
शरीरहन्त्रीमपि मोक्षनामिकाम् ।
न हन्त्ययं भक्तजनस्य तेन किं
न नित्यमुक्तः स्वयमेव किं श्रुतः ॥ ५२ ॥

भिषक् पिता ऽध्यापक एव वा न यैः
स्वशत्रुभावेन विचारितः पुरः ।
भ्रमन्ति ते यत्करुणाप्रभावयोर्
विबुध्य वेदानपि सूरिमानिनः ॥ ५३ ॥

गुणौघपारायणमप्यसद्गुणं
यमाप्य नारायणमप्यनाश्रयम् ।
भवाब्धिपाराय न संस्पृहय्य तत्-
सुभक्तिसाराय नमन्ति तं परे ॥ ५४ ॥

निगृह्य भूतैरपि पञ्चभिर् धृतं
स्मरेण बाणैरपि पञ्चभिर् हतम् ।
अवाप्यमानञ्चयमेन पञ्चताम्
प्रपञ्चहृत् को, ऽर्हति रक्षितुं परः ॥ ५५ ॥

भवाब्धिमध्ये पतितस्य मज्जतो
बिघट्टितस्यापि च षड्भिरुर्म्मिभिः ।
अहङ्ग्रहग्राहगृहीतबर्ष्मणो
गतिर् गजस्येव ततो ऽन्यतः कुतः ॥ ५६ ॥

भवाहिदष्टस्य बिबिग्नचेतसः,
स्वजुष्टदेवैरपि बञ्चितस्य च ।
निमीलतो द्राग् भवतश्च च भस्मसाद्
जनस्य को जाङ्गलिकः परस् ततः ॥ ५७ ॥

अधस्पदं दुष्प्रतिपद्यते बरं
नरः प्रणिन्दन् निति निर्णयो न सन् ।
गुणेष्वगण्येषु हि सङ्गुणान् नमू-
नमुष्य गीर्वाणशिरोमणीयते ॥ ५८ ॥

इमं तु यो ऽहं प्रमिनोमि मन्यते
स एव चात्र भ्रमतीति बैदिकम् ।
बिचक्षणैरप्यबिलक्षणीयतां
गतस् ततो ऽसौ बिषयोबिलक्षणः ॥ ५९ ॥

अमुत्र भक्तेरिह यद्यपि स्फुटम्
परःसहस्राणि निदर्शनान्यपि ।
जगत्सु जाग्रत्यनिशं तथापि किं
लभेय तद्वर्णनपुण्यमञ्जसा ॥ ६० ॥

॥ अथ विशेषकम् ॥

युगान्तरोत्थास्तु च भक्ति वैभवम्,
पुराणवाणीभिरवर्णि नैकधा ।
न पश्चिमं कश्चन निश्चिचीषते
विपश्चिदित्येष च निश्चयो लघुः ॥ ६१ ॥

बहुश्रमा किन्तु कृतादिषु श्रुता
कलौ तु भक्तिर् हरिनाममात्रतः ।
भृता ऽप्यहं पूर्विकया निबध्नती
विवृद्धिमग्रन्थि कथं न केनचित् ॥ ६२ ॥

इति स्फुरद् वर्णनलोलुपं मनः,
सुभक्तिकार्य्याणि भृशं निभालयत् ।
कथं प्रधानं कथयानि तेष्विति
प्रवर्तयन् मां ब्यमृशच् चिरं कलौ ॥ ६३ ॥

॥ इति विशेषकम् ॥

अथ कुलकम् ।

इहास्ति लोभो ऽत्र चकास्ति मत्सरस्
तितिक्षुता नेह न जात्यता ऽत्र च ।

रतिर् न गोब्राह्मणयोरिहेह तु
स्मरेष्ट्रिरत्रापि च मोहबंहिमा ॥ ६४ ॥
इहापि देवान्तरगर्हणेह च
प्रदीप्यते दम्भ इह प्रमादिता ।
इहाधिविद्यं न विशेषधीर् मदस्
त्विहेह दैन्यन्त्विह बद्धमुष्टिता ॥ ६५ ॥
न शौचमत्रात्र च कोपजृम्भितं
दया तु नेहात्र न साम्यदर्शनम् ।
गुणग्रहो नात्र नचेह पौरुषं
न लोकलज्जेह न सत्यमत्र तु ॥ ६६ ॥
दुराग्रहोत्रेह च नास्ति दक्षता
बिबेचना नात्र नचात्र सूनृतम् ।
भयं किलेहास्ति बिरक्तिरत्र नो
नचेह सत्सङ्ग इहापि सत्क्रिया ॥ ६७ ॥
इति बहुमृशन्ती चित् पदानि त्यजन्ती
भगवति परभक्तेर् नूतनानीतराणि ।
सुसदृशपदमद्धा मोदते रूपनारा-
यणमणिमुनिमाप्य ख्यातशाण्डिल्यगोत्रम् ॥ ६८ ॥

॥ इति कुलकम् ॥

तस्यामूल्यमणेः पवित्रसरयूपारीणबिप्रावली
मूर्द्धाभ्यर्णघृणेस् त्रिपाठिसरणेः पुण्यैर् गुणैश् चिक्कणैः ।

अत्तेभ्यो हृदयङ्गमैः प्रगुणितः सम्वर्णये जीवनं
सोपोद्घातचरित्रमस्य करुणापूर्णं हरिस्मारणम् ।६९।
एकानंशाकृपया यं, हरिबंशा सुतं सुषुवे ।
दत्तादिव हरिदत्ताद्, बुधमूर्द्धमणेः शुभे काव्ये ॥ ७० ॥
तेनोमापतिनाम्ना, रचिते नकछेदरामेण ।
नारायणे ऽत्र पूर्णो, हरिवर्णः सर्ग आद्यो ऽयम् ॥ ७१ ॥

ऐशीं श्रियं विष्णुपदाब्जगेहां
देहावनद्धां सुलभां बिमुक्तिम् ।
त्रिबर्गसर्गं भवभोगिभाग्यं
नीराकृतिं काञ्चन नौमि देवीम् ॥ १ ॥
श्रीरामचन्द्रो भगवान् पुरा ऽश्व-
मेधे शतक्रोशसमायताङ्गीम् ।
सुबिस्तृतां चापि भुवं तदर्द्धं
ददौ वृतेभ्यो विधिवद् द्विजेभ्यः ॥ २ ॥
प्राग् रामरेखासरितो ऽथ पश्चात्
मौञ्जाद् बनादद्रिबरादवाक् च ।
उदक् सरय्वा बिषयो ऽय मस्ति
लोके महातीर्थमिव प्रसिद्धः ॥ ३ ॥
ते कान्यकुब्जा द्विजराजभूयं
बिप्राः सुनीता जगदीश्वरेण ।

त्वयं कलङ्कं च बिना बिरेजुर्
वेदैश् च वंशैः सकलैस् तपोभिः ॥ ४ ॥
संपन्नसत्वान् न तमो बबाधे
सुदूरनिष्ठान् न रजो जगाधे ।
ताँस् तत्र वास्तव्यतया पुपोष
लक्ष्मीस् तदीयैश् च गुणैस् तुतोष ॥ ५ ॥
बर्णास्त्रयो ऽन्ये ऽप्युपयोगयोग्या
बिनीतबेषाचरणाशयाढ्याः ।
अनुग्रहाद् बेदबिदग्रणीना
मनूषुरेनं बिषयं बिशिष्य ॥ ६ ॥
गर्गस्य वंश्या अपि गौतमस्य
बिभान्ति शाण्डिल्यमुनेरनेके ।
बिप्रा इहान्ये ऽपि परे च बर्णा
अद्यापि तद्वंशपरम्परासु ॥ ७ ॥
पादोनकोटित्रयसम्मितासु
समास्वतीतास्वपि नूतनेव ।
मायेव लोकान् भगवत्कृतेमान्
जहाति नाद्यापि च सम्प्रतिष्ठा ॥ ८ ॥
आसां च बिप्रोत्तममालिकानां
धृताभितोबन्द्धचरित्रसूत्राः ।

ये नायकाः पंक्तिषु पावनास्ते
स्वकीर्तितेजोभिरलं वलन्ति ॥ ९ ॥
मार्गांश्च ते वैष्णवशैवशाक्तान्
पूर्वागतान् धर्म्यतया जुषन्ते ।
ब्राह्मो बिवाहो ऽपि च सम्प्रतीमा-
नध्युष्य जाने नुगतार्थशब्दः ॥ १० ॥
पङ्क्तिः पदं यद् बलभीमसत्याऽऽ-
माशब्दवद् राजति पावनेषु ।
ततस् त्रुटीनामपि पूर्बमेभिर्
योगः परेभ्यो बिशिनष्टि काष्ठाम् ॥ ११ ॥
शुक्लश्च च मिश्रश्च च तथा त्रिपाठी
द्विबेद एवं बहवो ऽपि शब्दाः ।
बिप्रान् सगोत्रानपि बेदयोग-
भेदाद् बिभिन्दन्ति मथो ऽधुनैषु ॥ १२ ॥
कुतो ऽपि देशान्तरवासिनो ऽपि
राजन्त्यमी धर्मधुरीणधैर्य्याः ।
प्रणीतबह्नेरिव बिस्फुलिङ्गा
व्युत्थाय तार्णत्वभृतो ऽपि शुद्धाः ॥ १२ ॥
भूयश्च च पङ्क्तित्रुटिभेदभिन्ना
रामाश्च च कृष्णा मणयो ऽथ नाथाः ।

शाण्डिल्यगोत्राः प्रथिताश् चतुर्द्धा
त्रिपाठिनो विष्णुभुजाइवेह ॥ १४ ॥
अभूदमुष्मिन् मणिपङ्क्तिवंशे
गोरत्नशर्मा ऽतिविचित्रकर्मा ।
यन्निर्मितत्वात् पुरमृद्धलोक-
मद्यापि गोरत्नपुरं वदन्ति ॥ १५ ॥
गुरुण्डराज्ये ऽस्य पुरस्य नाम्ना
लोके महन् मण्डलमेव वित्तम् ।
बस्त्यङ्कितो मण्डलको ऽस्य खण्डो
भूमण्डलस्येव च मध्यदेशः ॥ १६ ॥
अध्यास्त गोरत्नपुरात् समीर-
कोणे त्रये कोमलयोजनानाम् ।
ग्रामं नदीभ्यां परिखीभवन्ती-
भ्यां भूषितं स्वं बलुआभिधंसः ॥ १७ ॥
इरावती चापि नदी धमेला
तद्राज्यसीमावलयीभवन्त्यौ ।
भूलोकवेष्टस्य धुनीधवस्य
सतीत्वमेते न तमां जहीतः ॥ १८ ॥
अद्यापि सार्द्धं श्रुतशीलवृत्तैः
स्वाहा स्वधा भुङ्क्ष्व पठा ऽऽस्व देहि ।

शब्दा यतो नोपरमन्ति तस्य
वंश्येषु चान्यास्वपि तत्प्रजासु ॥ १९ ॥

यन्मण्डले ग्रामवरास्तदाख्याः
ससीमकाः स्वर्णपुरादयो ऽपि ।
खण्डा अनेके प्रविभान्ति जम्बू-
द्वीपे प्रसिद्धाइव भारताद्याः ॥ २० ॥

शाण्डिल्यमुख्यास् तरवो ऽपि यत्र
श्रीशङ्करे किङ्करभावभाजः ।
शाण्डिल्यवद् द्वन्द्वतितिक्षवो ऽत्र
संसूत्रयन्त्यद्भुतभक्तिरीतीः ॥ २१ ॥

तज् ज्येष्ठपत्नी समसूत पुत्रान्
यदन्वयो ऽद्यापि च वृद्धवाटीम् ।
ग्रामं तथा ऽऽक्रामति देव्रियाख्यं,
यज् जानते पुण्यतयैव पुण्याः ॥ २२ ॥

ये देवबासिर्जमनामधेयौ
ग्रामौ समध्यासत ईड्यविप्राः ।
ते ऽमी त्वपत्यानि विभान्ति तस्य
पत्न्यां सुतस्यापि च मध्यमायाम् ॥ २३ ॥

भुवस् तु गो रत्नगणसम्भवेन
पुण्येन मारीचइवामरेशम् ।

पुत्रं स गोरत्नमणिः कनिष्ठ-
पत्न्यां स्वयोग्यं सुखिसंज्ञमाप ॥ २४ ॥
पुत्रेष्वथान्येष्वपि सत्सु तस्य
सुखी सुखं यत् स मुहुस् ततान ।
पुरुर् ययातेरिव नाहुषस्य
तत्प्रेमपात्रं परमं ततोऽभूत् ॥ २५ ॥
तस्मादभूद् दासमणिस् ततः स
चिन्तामणिस् तस्य सुतावपि द्वौ ।
स श्रीपतिर् यस्य तु पुण्यबंशो
ग्रामे हरिद्राभिध एक एषः ॥ २६ ॥
अथ द्वितीयो जगदीशशर्मा
पुत्रस्तु तस्यापि जुड़ावनोऽभूत् ।
पवित्र आविष्कृतकीर्तिकर्मा
शर्माणि यस्मादभजन् प्रजौघाः ॥ २७ ॥
स्थेमानमुद्रिक्तमवाप रिक्थं
यमाप्य लेखाद् बलुआभिधं तत् ।
निश्चिक्यिरे यत्र महाप्रतापाद्
गोरत्नमूर्त्यन्तरतां महान्तः ॥ २८ ॥
श्रीयुक्तनारायणनाम धर्म-
नारायणौ द्वौ तु जुड़ावनाख्यात् ।

बभूवतुस् तुल्यगुणौ बिधेयौ
वाहूइवास्यैव परौ सुवृत्तौ ॥ २९ ॥

नारायणस्याप्यभवत् प्रसादः
सन्तो ऽपि यस्मै स्पृहयाम्बभूबुः ।
गुरुङ् गिरीशो ऽपि निजात्मनारा-
यणात्मकं प्राप्य स यं तुतोष ॥ ३० ॥

अन्वारुरोहापि चितां सती यं
सूर्याभिधाना बरबर्णिनी सा ।
यां बीक्ष्य जिह्राय पुना रतिः सा
कामो यया नास्तमितो ऽनुसस्ने ॥ ३१ ॥

यो धर्मनारायण उक्तपूर्बस्
तस्यापि बंशो बलुआनिवासी ।
कृष्णप्रसादप्रमुखश्च चकास्ति
कर्माणि धर्म्याणि सदा दधानः ॥ ३२ ॥

गदाधरो माधवसञ्ज्ञकश्च च
ऋषी गिरीशस्य सुतावभूताम् ।
तत्रापि गायन्ति गदाधरस्य
कीर्तीर् यथैवादिगदाधरस्य ॥ ३३ ॥

गौरुद्धृता परिमिता सुखिता बितीर्णा
सेतुः कृतो ब्यवहृतौ दुरितं निरस्तम् ।

आप्यायिताश्च च पितरो दलितं रिपूणां
वक्षो ऽपि किं न कृतमत्र गदाधरेण ॥ ३४ ॥
उत्फुल्लयन् बिबुधहृत्कमलानि भिन्दँश्च
चेतस्तमांसि वसुधाधिपचक्रमित्रम् ।
आशाभिपूरणचणो हतशत्रुपङ्कः
पूर्वो ऽस्य पुत्र उदियाय रबिप्रकाशः ॥ ३५ ॥
तस्यावधप्रसादो, महीपनारायणश्च चैतौ ।
समभूतां पुत्रौकृष्ण, चरित्रस्त्वाद्यतस् तत्र॥ ३६ ॥
अन्यो रामचरित्रा, परनाम्ना पुत्ररूपेण ।
गङ्गामणिरपरोऽभूद् गादाधरिरस्य तनयस्तु॥३७॥
देवनरायणशर्मा, ऽऽभूताङ् गेदा च लेदा च ।
पुत्रौ तस्यामी तु, त्रयोऽपिदुर्दैवपरिपाकात् ॥३८॥
विस्फोटकरोगस्या, तिथयो भूत्वा ऽगमन् नाकम् ।
गङ्गामणिशाखेत्यं, छिन्ना दैवं हि दुर्बारम् ॥ ३९ ॥
भीष्मावतरं, तार्तीं यीकं गादाधरिं प्राहुः ।
योनायको ऽत्रकाव्ये,जावज्जीवं बिचित्रो ऽभूत् ४०
एकानंशाकृपया यं, हरिबंशा सुतं सुषुवे ।
दत्तादिव हरिदत्ताद्,बुधमूर्द्धमणेः शुभे काव्ये४१
तेनोमापतिनाम्ना, रचिते नकछेदरामेण ।
नारायणेऽत्रसर्गः, कुलकल्पोऽयंद्वितीयोऽगात्४२

अथ युग्मकम् ।

वाणाष्टाष्टग्लावि संवत् सहस्ये
शुक्ले वारेऽर्कें चतुर्दश्युपेते ।
चत्वारिंशद्दण्डतावत्पलान्ते,
राजत्यृक्षेऽलं पुनर्बस्वभिख्ये ॥ १ ॥

पादे तुर्यें कन्यकानाम्नि लग्ने
स्थाने स्थाने सत्सु सत्सु ग्रहेषु ।
तार्तीयीकोऽध्युर्वि गादाधरिस् सं
जातो बिप्रो रूपनारायणाख्यः ॥ २ ॥

इति युग्मकम् ।

यस्मिन् जाते ब्योममध्यात् सुधांशुर्
ज्योत्स्नापुष्पं साम्रतं सम्बबर्ष ।
तस्माद् भूमिर् मोदरोमाञ्चमुच्चैः
सस्यस्तोमं स्फारमभ्युज्जगार ॥ ३ ॥

आसामासुः साधुचेतांसि साधु
स्वान्ते शान्तिं तेनिरे दुष्टसत्वाः ।
पित्रोर् वाच्यं किं परेषामपिह्या-
नन्दाद्वैतं यत्र जाते बभूब ॥ ४ ॥

जावज्जीवं नोऽभ्यसिष्यत्यवश्य-
मद्भुत्यालोच्येव नामानि विष्णोः ।

साहस्राणि प्रोल्लसन्ति स्म कामं
वक्त्रेभ्यो ऽन्येषां च हर्षात् तदादि ॥ ५ ॥
गङ्गा देवी भीष्मजन्मापि हर्षात्
प्रस्मृत्यैनं सम्प्रदध्यौ शुभेन ।
ज्ञात्वा यावद्विन्दमासेव्य सेवां
मय्येवायं देहमुत्स्रक्ष्यतीति ॥ ६ ॥
श्रीवत्साङ्कश्च् चिद्घनानन्दरूपः
सत्सङ्कल्पः सर्वशक्त्यालयो ऽपि ।
भक्तोत्पत्त्या हर्षितो नित्यभावाद्
वाञ्छन् प्रेम्णा नो मुदाधिक्यमाप ॥ ७ ॥
प्रह्लादो वा नारदो वा ध्रुवो वा
भक्तो विष्णोरागमोक्तः प्रतीये ।
दृष्ट्वा बालं यं त्रिवर्षं मुरारे-
रर्चालग्नं भग्नमोहैर् मनुष्यैः ॥ ८ ॥
उर्वी गुर्वी तस्य सस्यातिभारैश्
श्रद्धाबद्धा ऽतः प्रजा सुप्रजाश्च ।
श्वास प्रश्वासश्च् चापि रिक्तो न विष्णोर्
नाम्ना साम्ना नाक्षरं चार्थभूम्ना ॥ ९ ॥
पद्मा पद्मानि स्वसद्मानि पूजा-
युञ्जि प्रोज्झ्यैवास्य भेजे कराब्जम् ।

तद्धस्त्रानामञ्जतः पूजयित्वा
सञ्जं प्रीत्यायञ्जनाभस्य जज्ञे ॥ १० ॥

वृत्तस्यापि स्वस्य सा तस्य गोत्र
नाम्ना चक्रे ऽवैमि शाण्डिल्यनाम ।
स्थेमानं यत् तत्कराब्जे दधे स्वं
लौल्यं मुक्ता ऽनुग्रहे गौरवेण ॥ ११ ॥

मद्धस्ते श्रीः स्वेशपूजायुजीयं
स्थेष्टा दुःखं मानुभूच् चञ्चलेति ।
सो ऽग्यैर् दानैर् नन्दयन् नर्थिसार्थं
कृष्णानीतं पारिजातं जिगाय ॥ १२ ॥

भक्तेर् जातो भक्ति रस्मात् प्रजाता
सध्रीचीना बा ऽस्य किम्बा न सा ऽन्या ।
यस्मिन् सा ऽऽस्ते बेत्तु तत्त्वं स इत्थं
लोको ऽवोचद् बाललीलावलोकी ॥ १३ ॥

योग्ये काले सूपनीताय तस्मै
प्राधीयानायाथ बेदान् सहाङ्गान् ।
कालेनाल्पेनैव दुर्ज्ञेयतत्वा
श्रद्धावृद्धा शारदा पारदा ऽभूत् ॥ १४ ॥

धर्मास् तस्मिन् पुस्फुरुर् धीर् दिदीपे
पद्मा पिप्ये भारती चापुपूरे ।

सर्वैर्देवा दिग्यिरे तस्य बेद
प्रारब्धानां कर्मणां सम्बिदं कः ॥ १५ ॥

गर्गश्च शुक्लश्च ठाकुराख्यो बभूव
पङ्क्तिर् ग्रामे मामखोरे द्विजन्मा ।
स्वीयां पुत्रीं रत्नपालीं स चक्रे
पत्नीं काल्यां साधु गुण्यां च तस्य ॥ १६ ॥

गार्ग्यो बंशः क्षीरबार्द्धिर् महेशं
चन्द्रं स्रष्ट्वा सुस्थिरां यां ससर्ज ।
युक्तं चक्रे सा रमा भूमिगा यद्
बब्रे कृष्णं रुपनारायणाख्यम् ॥ १७ ॥

बिष्णोर् भक्तौ पुरुषार्थाइवाथ
सत्त्वान् नीतौ सामदानादयश्च च ।
सृष्टौ बेदाः स्रष्टुरप्याविरासँश्च
चत्वारो ऽस्यां सूनवो ऽस्मात् क्रमेण ॥ १८ ॥

आद्यस्यासीन्नामधेयं शिवादि-
राजान्तं तच्चन्द्रचारुर् द्वितीयः ।
आस्ते तद्वच्च प्रशस्तस् तृतीयस्
तेषां तुर्यो भाग्यवन्नामधेयः ॥ १९ ॥

विद्वान् कन्यादानमाहात्म्यतत्त्वं
कन्यामेकामेव चाजीजनत् सः ।

तस्या नामाचीकरच्च च्छवीति-
राजीत्याभ्यां सक्रमाभ्यां पदाभ्याम् ॥ २० ॥
। युग्मकम् ॥
एभिः सिद्धां स्वां पितॄणाद् बिमुक्तिम्
भूयः स्थैर्यं लम्भयन् सम्भृताङ्गः ।
धर्मैः सिद्धे ऽप्यूर्द्धलोके पितॄणान्
धीमान् गच्छन् नानृशंस्याद् गयां सः ॥२१॥
शक्तिं प्रेष्ठां फल्गुशब्देन हित्वा
यस्यां रागाद् बैपरीत्यं गता ऽपि ।
ख्याता ऽऽदिष्टा लक्षणा दूतिकेव
लग्ना फल्गुं तामपश्यत् स्रवन्तीम् ॥ २२ ॥
यस्यां पिण्डे सैकते न्युप्तमात्रेऽ-
प्युड्डीयान्त्यापूर्बबातप्रबेगात् ।
निर्मीयन्ते तस्य लेशैरिवाशु
स्वर्भोगार्हा देहबन्धाः पितॄणाम् ॥ २३ ॥
स्पष्टं यस्यां कुत्रचित् कुत्रचित् तु
बारिच् छन्नं भाति सारस्वताभम् ।
स्पृष्टा नॄणां नारकानप्यशेषान्
पित्र्या न्याहन्त्यर्भकां डाकिनीव ॥ २४ ॥
अङ्कं देशे कीकटे कर्मनाशा-
रूपं प्रौञ्छत् स्वद्रिरब्धिप्रिया या ।

तत् स्वः सौख्यं न्यङ्मुखे ऽपि त्रिशङ्कौ
यद्वाःस्पर्शीमातरिश्वा दधाति ॥ २५ ॥

तस्यां पिण्डान् न्युप्य तान् सैकतान् स
क्रोशाभोगं तच्छिरो ऽगाद् गयस्य ।
तत्वज्ञानात् क्लेशनिष्पेषरुत्नाद्
यत्र श्राद्धं सङ्गिरन्ते गरीयः ॥ २६ ॥

संसारो ऽयं कीर्त्तनेनेव विष्णोः
सार्पो देहश्चापि भूधारणेन ।
शूद्रो विप्रायात्मनश्च चार्पणेन
लोके देशः कीकटो येन पुण्यः ॥ २७ ॥

यस्मिन् यात्रामात्रतो दुर्गतो ऽपि
पित्रादिभ्यो नारकाद् दुर्गतो ऽपि ।
मोक्षं दत्ते स्यात्तु मेवं परेषु
लोकेष्वप्यात्यन्तिकास्यां परेषु ॥ २८ ॥

येन भ्राजत्कृष्णपादाङ्कितेन
पञ्चक्रोशं कैकटं क्षेत्रमेव ।
रत्नैराढ्यं कालियस्येव बर्ष्म
सामुद्रं तल् लोकरम्यत्वमाप ॥ २९ ॥

यत्र श्राद्धस्याशया पुत्रकाम्या
सृष्टेर् मूलं जृम्भते बुद्धिमत्सु ।

श्राद्धी यस्मिँस् तु क्रिया ब्रह्मणाऽपि
हेतुं त्यक्त्वाऽऽकारि भूम्नीव भक्तिः ॥ ३० ॥

मूर्तिर् यस्मिन् सा ऽस्ति गादाधरी या
पद्भ्यामाक्रम्यासुरन्तं गयाख्यम् ।
भान्ती शश्वन्मुक्तिसत्रं पितृभ्यो
यच्छत्यच्छं पिण्डदानच्छलेन ॥ ३१ ॥

यस्यां विश्वोपक्रियाकौशलाना-
मुक्तौ शक्तिः केवलं तत्र कल्प्या
वेदैराप्तैर् दर्शितं शार्ङ्गपाणौ ।
विश्वेशत्वं ह्यन्यथा नो घटेत ॥ ३२ ॥

आश्मी भूत्वा सत्त्ववृष्टिं सृजन्ती
मूर्त्ता सत्ता या दृशा स्पृष्टमात्रा ।
किं स्वं द्रष्टुस् तत्पितॄणामनात्म
बोधानामप्याशु मुक्तिं तनोति ॥ ३३ ॥

पादाधःस्थस्यापि वज्रध्वजादेर्
दृष्ट्या लोका वञ्चिता मा स्म भूवन् ।
इत्युत्कीर्य स्वे पदाब्जे शिलायाम्
मर्माचष्टे या ऽपि सामुद्रकस्य ॥ ३४ ॥

वेद्यां वेद्यां तत्र पिण्डान् निरुप्य
शय्याभूषावस्त्रवित्तादिकं च ।

बिप्रान् सम्यग्भोजयित्वा बहूँश्च च
बिद्याबित्तानार्चिचद् दक्षिणाभिः ॥ ३५ ॥
एवं कुर्वन् पैतृकं कर्म धर्म्यम्
प्राप्याक्षय्यं तं बटं तत्र पिण्डान् ।
दत्वाऽत्यर्थं तोषयामास बिप्राँश्च
चातुर्भद्रं ब्याप्य नैसर्गिकं सः ॥ ३६ ॥
साम्बर्त्तेऽब्धावस्वपद् यस्य पात्रे
पात्रे नावि क्रीडया चक्रपाणिः ।
लोकस्थित्यै यस् तपस्यत्यजस्रं
स्थाणुर् भूत्वा स्वैर् वरोहैर् जटालः ॥ ३७ ॥
बद्ध्वा हस्तद्वन्द्वमत्रास्य दान-
वीरस्यापन् म्लानतां पुष्पमाला ।
बन्धान् नव्यात् तत्करौ दानशौण्डौ
हस्तौ तौ बैरोचनेरन्वकार्ष्टाम् ॥ ३८ ॥
बन्द्वारस् ते बिप्रमुख्याब्यवृण्वन्
प्रह्वाः स्वीयं ब्याजतो बामनत्वम् ।
सम्मोच्यैनं किं तु बैकुण्ठसौख्य-
माशासाना आपुरस्योन्नतत्वम् ॥ ३९ ॥
द्वैतीयीको दानशौण्डो न ते ऽस्ति
बद्धो ऽस्माभिर्यत् तथापि त्वमत्र ।

आचारस्यैवानुसारात् तदेतत्
न्तव्यं नः प्रार्थयाञ्चक्रिरे ते ॥ ४० ॥

वृष्टो मेघः शान्तधूमः कृशानुर्
गङ्गौघो वा शारदः सो ऽथ दानात् ।
लब्ध्वौज्ज्वल्यं स्वान् गृहानेत्य कृत्वा
ऽथाज्यश्राद्धं कर्मठो निर्बबार ॥ ४१ ॥

तीर्थान्यन्या नीश चिह्नान्वितानि
प्रेप्सुर्भक्तः सो ऽथ मौर्तेयमूर्तिम् ।
लोके शिवादीक्षितां सत्तपःसु
द्रष्टुं पूर्बं सम्प्रतस्थे बिशालाम् ॥ ४२ ॥

जीवाविष्टैर् वाहनैः किं नु वाच्यं
नोपानद्भ्यामप्यसौ गन्तुमैषीत् ।
नृणां भक्त्या तत्पदाब्जे तदेत्य
भूमे रेणूभूय लेगुर् मनांसि ॥ ४३ ॥

छत्रत्यागात् पुष्पवृष्टिश् च सौरी
भूत्वा भा मूर्द्धास्य रेजे ऽथ सौरी ।
तं स्वेन स्वं तस्य च ब्रह्मरन्ध्र
निर्यद्भासा सम्पुनानेव तूर्णम् ॥ ४४ ॥

पूर्वाभ्यस्ताशेषयोगस्य काय-
ब्यूहप्रायाः प्रायशस् तस्य योग्याः ।

अन्वीयु स्तं वाग्मिनः शार्ङ्गपाणे-
राख्या नौघे रध्वखेदापनुत्त्यै ॥ ४५ ॥

एवम्भूतं सार्थवाहं तपोभिर्
लभ्यं ज्ञात्वा सर्व एवानुजग्मुः ।
केचिद् देशस्योज्जटत्वप्रसङ्गाद्
भीता दुःखात् तस्थु रात्मालयेषु

रक्षन्त्येवान्तर् द्रुतं राघवेण
न्यस्तं तद्वद् बक्रगत्या सरय्वा ।
गुप्तां साकेतापराख्यां पुरीं स
गच्छन् मार्गे ऽभ्यागमत् साध्वयोध्याम् ॥ ४७ ॥

या वाशिष्ठी या च मानव्यमोघं
यस्यां स्नानं यत्र वासो न बन्ध्यः ।
या फेनैर् या सौधवर्यैश् च शुभ्रैश्
छत्रै राज्ञीवापगानां पुरां च ॥ ४८ ॥

भक्तं स्वीयं तं विशालाविलोलं
खिद्यन्त्यावप्येकरात्रात् परं ते ।
नोपारौत्सां तत्र तत्रेभयाने
ऽपीभस्वामी तद्वशस्वीतिमत्वा ॥ ४९ ॥

कर्माणि श्रीशार्ङ्गिणो धर्ममर्म-
बर्माणि स्वाकर्णयन् बर्णयंश् च ।

अध्वश्रान्तेरूर्मितान्तेश् च नाम
सार्थो नामाप्यस्य नार्तीथपत् तत् ॥ ५० ॥
के दाराः के सूनवः का तनुर्वा
केदारादेः का कथैवेति यद् धीः ।
के ऽदा रायं मह्यमित्यर्थितो ऽन्यैः
केदाराख्यं क्षेत्रमैक्षिष्ट तत् सः ॥ ५१ ॥
यस्मिन् बिष्णुब्रह्मणोर् वैशसेऽति-
घोरे चाहम् पूर्बिकोपज्ञमिद्धे ।
शान्त्यायीशस्या तुलाशालिदिव्य-
मादिज्योतिर् लिङ्ग माबिर्बभूब ॥ ५२ ॥
लिङ्गं तस्मिन् सन्निरूप्याथ शैवं
नामं नामं तन् मुनिः सन्नुनाव ।
भेदं ध्यायेदीशबिष्ण्वोः कथं स
यो नापश्यत्तं जडेष्वप्यसन्तम् ॥ ५३ ॥
कस्त्वां स्तोतुं शक्त इत्येतदेव
स्तोत्रं नान्यद् यस्य तं किं स्तुवीय ।
ध्यायेयं बा किं निराकारमीश,
त्वामित्यस्यैवोत्तरं लिङ्गमेतत् ॥ ५४ ॥
ये मुह्यन्त्यत्रापि जीवादुराशा-
पाशाकृष्टास् त्वं दयस्वापि तेषाम् ।

द्वेषावेशः किं फलेन् न त्वयीत्थम्
पुण्यं पुण्यं पूतनादेरि वैषाम् ॥ ५५ ॥
लिङ्गस्या स्यालोकनादेव सिद्धौ
सिद्धौ सिद्धौ स्वर्गभोगापवर्गौ ।
तत् प्राज्ञः सन् कः स्तुवीताधर्मेणं
कर्तुन् त्वामित्योच्य सोऽगाद् यथावत् ॥ ५६ ॥
गच्छन्नेवं संयतः शास्त्ररीत्या
तीर्त्वैवाब्धिं संसृतेर् मार्ग मुच्चैः ।
प्राप ब्रह्म ब्राह्मणः शर्मपात्रं
यात्रामात्रात् तानवं सम्प्रहाय ॥ ५७ ॥
दृष्ट्वा मूर्तिन् द्राक् स नारायणीयां
जीवन्मुक्तो दण्डवत् सन्ननाम
प्रारब्धेनैवागतेः साधु तस्मै
जीवन्मुक्तेः पौनरुक्तीं ददौ सा ॥ ५८ ॥
दृष्ट्वा नत्वा चापि मूर्तिं नरस्य
भूतिं भूपैरप्यलभ्यां स लेभे ।
तार्क्ष्यादीनां दर्शनाद् बन्दनाच्च
विष्णौ भक्तेर् भूरिभूमान माप ॥ ५९ ॥
सम्प्रार्थ्येनीयममरै रपि नार्थये त्वाम्
वाणिज्यभावकलुषां न हि भक्तिमीहे ।

न स्तौमि किन्तु न हि वाक्परतां त्वदीया-
मिच्छामि भङ्क्तुमिति स प्रणनाम नाम॥६०॥
पश्यामि यत् तदिह हन्मि परोक्षभावं
गत्वाऽहनं च तव वैभव मित्यदो मे ।
मन्तुद्वयं सदपि मन्तुमनर्हमेव
यस्माद् गतानुगतिकत्वमबाधनीयम् ॥६१॥
श्रौतं वचो यदवधीर्य मनो मदीयं
लब्धुं भवन्तमनुधावति सर्वदैव ।
नागश्च चलस्य तदपि च्युतमत्रपाद
पद्मद्वये तव तदप्यलिरस्त्यनीलम् ॥ ६२ ॥
इत्थं निषेधमुखतो बहुधा स वाग्मी
मोदाद् गलद्विमललोचनवारिधारः ।
रोमाञ्चकञ्चुकधरः कलमेकतानः
सर्वेश्वरं प्रकटयन्निव तुष्टुवे तम् ॥ ६३ ॥
तस्मान् निवृत्य स विरञ्चिकपालमध्ये
पिण्डानदा दथ दिनानि कियन्त्युषित्वा ।
ध्यायन् परास्ततदुदारतरो बदर्याः
संहृष्टपुष्टजनजुष्टसमर्थसार्थः ॥ ६४ ॥
एकानंशाकृपया यं, हरिवंशा सुतं सुषुवे ।
दत्तादिवहरिदत्ताद्,बुधमूर्द्धमणेःशुभेकाव्ये।६५।

तेनोमापतिनाम्ना रचिते नकच्छेदरामेण ।
तार्तीयीको नारा, यणे ऽत्र तीर्थप्रथः सर्गः ॥ ६६ ॥

यथापूर्बमथारब्ध, प्रारब्धसदृशं विधिम् ।
त्रैबर्गिकः स्वसंसर्गात्, स्वर्गयन् गां स सङ्गजित् ॥१॥
पद्भ्यामेव प्रयागादी, नगात् पर्बणि पर्बणि ।
आर्यमर्यादया तत्र, स स्वौदार्य मपप्रथत् ॥ २ ॥
दुर्बिधान् बिबुधान् बुद्धा, बिबिधाँ स्तान् ब्यधाद् बिधीन् ।
धनधान्यसमृद्धा येस्, ते ऽधिन्वन् मधुसूदनम् ॥३॥
बिशन्निव शरीराणि, स्वसता मसता मपि ।
दुष्कराण्यपि कर्माणि, तैः सशर्मा ण्यचीकरत् ॥४॥
प्रजासु तस्य सज्जासु सदा पुण्याय कर्मणे ।
योगावी पयसी भूमि, रत्नानि बबृषुर् भृशम् ॥५॥
सत्राण्यप्यातिथेय्यन्ति, यत् सम्बभूतिरे ऽन्वहम् ।
तस्य देशो ऽतिथेस् तेन, दुर्भिक्षं समधुक्षत ॥ ६ ॥
अनन्तर्बाणयो ऽपीभ्या, अनुचक्रुः सदैव तम् ।
गतानुगतिकानां हि, तेषामासीत् स दैवतम् ॥७॥
ऐधिष्टापि द्विषां तस्य, स्पर्द्धया धर्मबन्धुता ।
लोडयन्नो ऽपि शुभदा, गङ्गौघाइव सत्धवः ॥ ८ ॥
जजागार स धर्मेषु, लाभेषु दिवसेष्विव ।
निदद्रौ दुष्कृतिषु सत्, पीडनासु निशास्विव ॥९॥

सुधामिवोद्गिरद्भिः स, वाग्मिभिः समसेव्यत ।
दुग्धाम्बुधिर्यथाराका, चन्द्रपादैर्महोज्ज्वलैः१०

अर्थकामौ स्वलङ्घमौ, नाभजिष्ट स धिष्टनीः ।
हेतुहृत् कार्यमाधुर्यं, किं रोचेत विविञ्चते ॥ ११ ॥

वृतो वेदैरिव सुतैश्, चतुर्भिश् चतुराननः ।
अधिब्रह्मसभं पद्मा, सनासीनो ऽभ्यराजत ॥ १२ ॥

पात्राण्येतस्य दानानां, पूर्णान्येव सदा ऽभवन् ।
नदस्येव प्रबाहाणां, बर्षाणानिशभाविनाम् ॥१३॥

ख्यातमर्थवतामर्थि, सार्थं ऽपार्थं तु नाम यत् ।
तस्मै न सस्वदे तत् तु, भद्रामङ्गलयोरिव ॥ १४ ॥

हैयङ्गवीनहृदयः, सुधामधुरवागसौ ।
दुग्धमुग्धयशोराशिर्, बशो ऽकार्षीत् स्वदृष्टवनः १५

दिने दिने ज्ञानमिव, दीयमान मबर्द्धत ।
द्रविणं तस्य तेनासौ, द्विगुणद्रविणोऽभवत् ॥१६॥

तेन दत्त्वा समृद्धेन, दाता पूगस्य हीयते ।
इत्युक्तिः स्थापिता पूर्णा, पूगखण्डरदे निजे ॥ १७ ॥

अक्रीणाद्बहून्ग्रामान्, ब्रह्मभ्यश्चाब्यशिश्रणत् ।
प्राणिणत् सुजनान् निःस्वा, नघ्नुणात् तु न कंचन१८

बिष्णोर् नामसहस्रस्य पारायणपरायणः ।
सौषुप्तीं सम्पदमपि, मेने स बिपदं यथा ॥ १९ ॥

स पुण्यजनशब्देन, पूर्बदेवपदेन च ।
रक्षांस्यपि च दैतेया, नबादीन् न पदान्तरैः ॥२०॥
धर्मार्थयोरभूद् बृद्धि, रन्योन्यं स्पर्द्धमानयोः ।
तस्मिन्कामस्तृतीयत्वान्, नैधताहीयतापिबा२१॥
मैत्र्यादिभावनाभ्यास, निष्कर्षमयमानसे ।
तस्मिन् सत्यमिवाजात, शत्रुता ऽपिब्यराजत२२॥
कण्ठोपकण्ठपूर्णेषु, जह्नुजायाः शुभैर् जलैः ।
आनर्चादर्शपात्रेषु, प्रत्यहं तां स भक्तितः॥ २३ ॥
पुरःस्थितेषु तेष्वेष, बभूब प्रतिबिम्बितः ।
भीष्मो बाल्ये ऽङ्कमारोप्य, लाल्यमानइवामुया२४
नैर्मल्याच्छून्यतां तेषा, मन्यान् प्रतियतो नरान् ।
स्तवश्रवमुदा निर्यन्, गङ्गोद्गारो ऽभ्यचीचितत्२५॥
सायुज्यमेष गङ्गायास्, तेषु प्रतिफलन् ययौ ।
सैव बा ऽस्य तदापेयत्, सारूप्यं कथमन्यथा २६॥
ब्रह्मद्रवत्वं गङ्गायास्, तत्र स्फुटमदृश्यत ।
ब्रह्मीभूतो ऽपि तद्वृत्त्या, द्रुतमेव सयद्द्रुतः॥२७॥
कुरिता च्छायया तस्य, शोणचन्दनचर्चिता ।
गङ्गा हर्षोच्छलद्वेणी, त्रिवेणीव बभौ तदा ॥ २८ ॥
गङ्गागर्भं प्रसादाढ्यं, सुशीमं पावनं परम् ।
तन्मनो बा बहिरभूत्, पात्रं बा ऽन्तरभूत् किमु२९

भक्त्या ऽऽधमर्ण्यमेतस्य, वहन्ती पुण्यकर्मणः ।
स्वमोक्षहेतुं नावैत् सा, बिमृशन्त्यपि जाह्नवी ३०
अध्युवास तदाद्यस्य, मनो वेश्म मरुत् सरित् ।
दास्यन्त्यस्मै फलं तद् यच्, श्लाघ्यं सर्वसुपर्वभिः ३१
गङ्गात्रिपाठिनोरेवं, मिथो ऽन्तरधितिष्ठतोः ।
आधाराधेयभावोऽपि, लोकोत्तरतरोऽभवत् ॥३२॥
उददीदिपदस्याद्धा, धर्मश्रद्धां सदा बुधः ।
गयाप्रसादशर्मा यो, वयस्यो ऽस्य समस्तबित् ३३
वादयुद्धेष्वजय्यो ऽभूद् यो,ऽखिलैः प्रतिवादिभिः
युध्यमानो ऽपि बहुशस्, त्रिबिक्रमइवासुरैः ॥३४॥
रुद्ध्वा नागेशमञ्जूषां, स्वीयं हृदयमन्दिरम् ।
आसीद् यो युक्तिकोटीशो भीमश् च प्रतिवादिनाम् ३५
शाण्डिल्यकुलदीपो यो, बिद्याबिद्योतदंशितः ।
लघुस्वर्णपुरग्राम, मध्यमध्यास्त सद्दृशः ॥ ३६ ॥
अनन्यत्वादनङ्को ऽपि, वक्रचिह्नं बिना ऽप्यभूत् ।
पङ्क्तित्रुत्योस्तयोर्योगः, शोभनः सार्वलौकिकः ३७
यश् च शूली स्वतिक्रान्ते, वंहीयस्यप्यनेहसि ।
त्रुटिः सम्प्रेषितः सख्या, साकेते स्वां तनुञ् जहौ ३८
अनिरुद्धश् च मथुरा, प्रसादश् च बभूवतुः ।
शिवराजमणेः पुत्रौ, पितामहमनुव्रतौ ॥ ३९ ॥

चन्द्रचारोः सुतो ऽयोध्या, प्रसादइति यो ऽभवत् ।
मुहुः स मुमुदे तेन, सततं तत् पितामहः ॥ ४० ॥
प्रशस्तस्य प्रशस्तौ द्वौ, तनूजौ सम्बभूवतुः ।
काशीप्रसादशर्मैकस्, तीर्थराजाभिधोऽपरः॥४१॥
शिवराजमणिर् ज्येष्ठः, कुलशीलबलोन्नतः ।
पितुर्भारं बभाराद्धं, शेषाहेः कमठो यथा ॥ ४२ ॥
अभ्यागतानामातिथ्यं,प्रजानां चापि पालनम् ।
यस्मिन्निधाय तच्चिन्ता,मत्यासीत्प्रीतिमान्पिता ४३
धर्मकर्माणि सर्वाणि, सेष्टापूर्तादिकानि तु ।
सराजद्वारकार्याणि, चन्द्रचारुमणौ दधे ॥ ४४ ॥
द्वितीयः स सुतस् तस्य, पूर्णो गुणगणैर् घृणी ।
पित्रोर त्यनुरक्तश् च, तदवोढ दृढं दृढः ॥ ४५ ॥
आन्तःपुरिककृत्यानां, भृत्यानां चापि बन्धुषु ।
सम्प्रायानां चाधिपत्यं, प्रशस्तमण येददौ ॥४६॥
तार्तीयीकः सुतस् तस्य, श्रीदुर्गाङ्घ्र्यब्जषट्पदः ।
धार्मिको गुणवान् सोऽपि, कार्याणि स्वान्यचीकरत्४७
बालङ् कोमलचारित्रं, तुरीयं भाग्यवन्मणिम् ।
गुणानजिग्रहत् प्रीतो, लालयन् स मुहुर्मुनिः ४८॥
सभा न्यवेशि तेनैका, श्रीविद्याधर्मवर्द्धिनी ।
यस्याःशाखाःप्रशाखाश्च,प्रयागादिषुजाग्रति४९

प्रथा ऽन्वर्थाभिधानाया, यस्या दिग्दन्तिकर्णगा ।
यतः कुरीतयो नेशुः, प्रचेरुश् च सुरीतयः ॥ ५० ॥
विद्योतन्तेतमां विद्या, निरवद्या यतो ऽधुना ।
कटुद्वाहापव्ययाद्या, यामासाद्य विपेदिरे ॥ ५१ ॥
श्रीमद्भगवदीशान,पादपद्म मधुव्रतम् ।
चन्द्रचारुमणिं चक्रे, स सुतं तत्सभापतिम् ॥ ५२ ॥
भ्रातुर्ज्यैष्ठस्य पौत्रे तु, प्रेष्ठे स प्रत्यतिष्ठिपत् ।
तत्कार्याध्यक्षतां राम, चरित्रमणिशर्मणि ॥ ५३ ॥

कलापकम् ।

तथा तस्यैव दौहित्रं, धरोपाधिधरं बुधम् ।
नायकं रत्नमालायाश्, चम्पारण्ये प्रथाभृतः॥५४॥
मिश्रस्य वत्सगोत्रस्य, नादवेदविदोविदः ।
पङ्क्तिपावनमुख्यस्य, कमलाधरशर्मणः ॥ ५५ ॥
पुत्रं ज्येष्ठं गुणश्रेष्ठं, सर्वकार्यधुरन्धरम् ।
पत्रिका यस्य विख्याता, श्रीविद्याधर्मदीपिका॥५६
तं चन्द्रशेखरधर, शर्माणं शर्मकर्मठम् ।
महामन्त्रिपदे योग्ये, तस्या अभिषिषेच सः ॥५७॥

युग्मकम् ।

अथ स्वबदरीयात्रा, सार्थवाहस्य देहजम् ।
रामनारायणाख्यस्य, कनीयांसं विपश्चितः ॥५८॥

भिषजं मिश्रपदवी, धारिणं सुहृदं बिदम् ।
तस्याः सयज्ञदत्ताख्यं, मुद्रासंग्राहकं व्यधात् ५९

युग्मकम् ।

सरयूपारदेशस्थे, यस्यासन् पूर्वपूरुषाः ।
ग्रामे हस्तिपलाशाख्ये, बुधः सहृदयश् च यः॥६०॥
विश्वोपकारनिरतो, देवकीनन्दनाभिधः ।
त्रिपाठी सम्प्रचक्रे तं, स तस्या उपदेशकम्॥ ६१ ॥

युग्मकम् ।

प्रयागे बलुआग्रामे या गोरक्षपुरे ऽपि च ।
पाठशालास्तयासाधु,साधिताःसभयाशुभाः६२
तास्वाद्यान्तिमयोर् नेता,देवकीनन्दनः स वित्।
तेनैव मुनिना चक्रे, यः प्रयागे ऽद्य दीव्यति ॥६३॥

विशेषकम् ।

बलुआपाठशालायां शास्त्रार्थेषु बिचक्षणम् ।
गौतमान्वयजं मिश्रं, बिमर्शेषु बिलक्षणम् ॥ ६४ ॥
कथालेखपथाभिज्ञं, साधुं शङ्करकिङ्करम् ।
महाबीरप्रसादाख्यं,महास्थाननिवासिनम्॥६५॥
प्रधानाध्यापकं कृत्वा,च्छात्राणां जीविकादिकम्
सँस्थाप्यविपुलाङ्कीर्तिं,समुनिःस्वामपीपलत्६६
आगस्त्यश्चुलुकःसोष्मा,कटाक्षः कापिलो ऽपिच
सागरानिवतद्वंशः,सामन्तानुपर्यभूद्भृशम्६७

चाटाँश्चकौटिकाँश्चापि, सर्वान्समुदचीचटत्
चन्द्रचारुमणी राज, कुलकार्यविकुण्ठधीः ॥ ६८ ॥
तं प्रति प्रतिपत्तये, साटोपमदनंसिषुः ।
तान्ममर्द स बिश्वेशः, कालियस्यफणानिव ॥ ६९ ॥
मनुबर्णा इवैतस्य, नामबर्णाः श्रुतिस्पृशः ।
मानम्बिषमिवाहेयं, हेयमाश्ननस्वबैरिणाम् ७०
एवम् महासाहसिकान्, बैहासिकइवासकृत् ।
सन्निरस्यप्रशास्तिस्म, नाकायाद्भाग्यवन्मणिः ७१।
जीवातुरायुधीयानां, सत्कारो ऽपि महौजसाम् ।
प्रजानांकण्टकोद्धारः, सश्राश्चर्यन्नृणामभूत् ।७२।
तेषां चतुर्णा मपि किं, बर्णनीयं महौजसाम् ।
चतुर्द्धाप्रबिभक्तांशं, पित्र्यम् मूर्तन्तपोहिते ॥ ७३ ॥
अथामुन्नीरदंश्यामम्, मुनिम्मान्यंजराऽऽत्मना ।
प्रकल्प्य सबलाकंद्रा, गुपकर्णमबर्णयत् ॥ ७४ ॥
श्रुतिभिः स्मृतिभिश्चैवं, सदाचारैः स्वतुष्टिभिः ।
धर्मःपुष्टस्त्वयाजुष्टः, कस्को ऽनेनन बर्ष्मणा ॥ ७५ ॥
किं च भक्तश्चतुर्थो ऽसि, हरेरैकान्तिकः प्रियः ।
अतो नैष्कर्म्यमूर्द्धान, मप्यध्युष्य बिराजसे ॥ ७६ ॥
बेदगङ्गौघमलय, रूपनारायणा इमे ।
परोपकारसारा इ, त्यवाप्तं च यशस् त्वया ॥ ७७ ॥

जितः कष्टश्च चतुर्वर्गश्च, चतुर्भिः पतिबाहुभिः।
ध्यानयुद्धे जयश्रीस्त्वा, मालिलिङ्गसहेङ्गितम् ७८
वैष्णवी सात्त्विकी शक्तिर्, या गङ्गा जगति श्रुता।
मुक्तिं सा धारयति ते, यतितेजस्करीं पराम् ॥७९॥
दानज्ञानावदानार्थास्, त्वया लक्षगुणीकृताः।
मानामानक्षमादानै, रतस्त्वङ्कस्यलोलुपः ॥८०॥
पुत्रानुत्पाद्य संस्कृत्य, चतुरश्च चतुरः समान्।
अध्याप्य चालयस्यायि, वृत्तिभिः समयूयुजः ॥८१॥
देवान् पितॄन् महर्षींश्च, चकर्थप्रत्युतासकृत्।
अचिकित्स्याभूत पूर्वा, धमर्ण्यान् सुप्रसेदुषः ॥८२॥
अन्योन्यमनुबिद्धाङ्गान्, गृह्णानो ऽपप्रथः पृथून्।
स्पष्टं धर्मार्थकामाँस्त्वं, स्वीयांबात्स्यायनीयताम्
एवं सङ्गृह्णतो लोकान्, प्रारब्धान्यघ्नतस् तव।
तेषामल्पावशेषत्वाद्, भीतभीताऽहमागमम्।८४।
द्विषन्निव त्रिवर्गस्य, तुर्यो ऽर्थः प्राहिणोत् स माम्
प्रष्ठा प्रेष्ठा च तस्याहं, ज्ञानवैराग्यसूर्मता ॥ ८५ ॥
तस्मादात्मा यथा जीवन्, मोक्षायोपहतस्तथा।
देहो मे शरणैषिण्यै वितराण्यो घृणिनात्वया ८६
श्रुत्वैतदुररीचक्रे चक्रेश्वरवशंवदः।
बृहद्रथइव स्वार्थं जरां निर्जरसन्निभः ॥ ८७ ॥

उपारंसीच्च बाह्येभ्यो, बिषयेभ्यस् ततः परम् ।
परं ज्योतिरुपानंसीत्, तं शुद्धं सर्बतोमुखम् ॥८८॥
ततः पत्युरवेत्यैतां, वृत्तिं तस्य सती सतीम् ।
दुरूहमर्थमौहिष्ट, सा सतीब्रसतीब्रतम् ॥ ८९ ॥
सतीनां पतिषु व्याप्तिः, श्रुतिस्मृतिमुखोद्गता ।
साताद्दात्म्येऽस्तिदम्पत्योर्, दृढाऽत्यब्यभिचारतः९०
यदभिन्नादभिन्नो यस्, तदभिन्नः स इत्यतः ।
दम्पत्योर्न भिदा मुक्तौ, परस्यामिति निर्णये ॥९१॥
ज्ञानान्मुक्तिः सतीपत्यो,रबियोग इति द्वयोः ।
बिरोधो न हि भज्येत, परथा बेदबेद्ययोः ॥ ९२ ॥
पत्युर्मुक्तेः परस्यास् त, दन्यथाऽनुपपत्तितः ।
पिष्टां ज्ञानं बिरागश्च् च, पेष्टारौ मुक्तिमाशुमे ॥९३॥
सतीनां त्वसमा निष्ठा, विवेक्तु मवशिष्यते ।
नारून्तुदानचोच्छास्त्र, वर्तिनीयाप्रसिध्यतु ॥९४॥
श्रूयन्तेऽथापिदृश्यन्ते, स्वापतेर्यीश्रिताशुचिताम्
बह्व्यःसाध्व्योऽप्यधात्तीत्ताःकिन्तुबैधव्यहव्यभुक्९५
अपिचैणकृपाणीयैः, कारणैः सहमारिणीः ।
पत्या न स्पष्टमाचष्टे, को ऽपि हेतुः पतिब्रताः ॥९६॥
याश्चकाश्चित्स्वमृषत, दृष्ट्वाऽऽतङ्कातुरान्पतीन् ।
तद्दुःखदृष्टिदौर्भाग्य, भल्लैरुल्लासितास् तुताः ॥९७॥

किन्नासुपरिपाटीषु, या ऽऽत्मघातनिषेधिनी ।
किञ्चित्सङ्कोच्यतेऽवश्यं,साश्रुतिस्तन्नयुज्यते ९८
प्रारब्धकर्मनिघ्ने तु, भोगे विघ्ने ऽभिजाग्रति ।
वार्त्ताऽपिकावराकस्य,मृत्योस्तच्छून्यसर्पिणः ९९
कथं कथासु श्लिष्येय, परिश्लिष्येय दुष्टिभिः ।
केन श्लिष्येय गुरुणा,श्लिष्येयत्तधिया ऽधुना ।१००।
यद्वा मत्प्रार्थितं नैव, लभ्यं युक्तिशतैरपि ।
कः किंश्लिष्यिता किम्वा,विमृश्यामिमृषाबहु१०१॥
इत्थं निश्चित्य भगवद्,यत्तचित्ता ऽऽचकाङ्क्ष सा ।
भर्तुर्भर्ता निराकर्ता,भूयादाधिं ममेत्यलम् ॥१०२॥
यापयामास समयं, कथञ्चिद् हरितत्परा ।
हेतुं तु नाध्यवससौ, ससौकर्यं निजार्थिते॥१०३॥
अत्रान्तरे भगवतो, भक्तभावानुभाविनः ।
सम्मतेनेव गुल्मेन, लतेवा चक्रमेसती ॥ १०४ ॥
चान्द्री कलेव तेनासौ, रोगराजेन सङ्गता ।
प्रत्यहं क्षीयमाणा,ऽपि तमसानाभ्यभूयत॥१०५॥
यथाशास्त्रं तु निर्णीय, चिकित्साबैद्यबेदिता ।
नोन्मूलयितुमुत्सेहे,रोगं बात्येवभूधरम् ॥ १०६ ॥
मार्गमासाद् रविर्मार्गं,यावत् तत्याजदक्षिणम् ।
तावत्प्रतीक्ष्यरोगाग्नि,रुज्जजृम्भेदिनैःसह॥१०७॥

अथ कुलकम् ।

ततो बाणाब्धिनन्देन्दु, मिते बैक्रमबत्सरे ।
नवम्याम् फाल्गुने शुक्ले, ऽनुकूले कालतल्लजे ॥१०८॥
भारतादिव तद्दुःखोद्, विग्ने निर्बिद्य भास्वति ।
याते निम्लुच्य तपसे, घनमस्ताद्रिकाननम् ॥१०९॥
वाति बाते सनिर्घाते, कर्कशे सहशर्करे ।
चण्डे हृत्कम्पिनि क्रुद्ध, कृतान्तोद्गारभैरवे ॥ ११० ॥
शून्यं हृदयमुद्भिद्य, हिमशोकाश्रुबिन्दुषु ।
पतत्सु बक्रबक्त्रेन्दु, द्युतिहृत्सु बिहायसः ॥ १११ ॥
चतुर्द्धा ऽप्यनवेक्ष्यायां, शोकशेषहिमाणुभिः ।
अरुन्धत्यां सतीधर्मै, तत्सख्याममितौजसि ॥११२॥
शोकदीर्णस्य यामिन्या, हृदयस्येव शोणितैः ।
लोहितायति शुभ्रांशौ, स्नातुमभ्यब्धिधावति ११३॥
ज्वालामालाजटालाना, मुल्कानां संप्लवाकुलम् ।
रुवतीषु निरीक्ष्याभ्रम्, फेरुनारीषु भैरवम् ॥११४॥
सताम्बिहाय पतनं, बिहायसि बिहायसाम् ।
कोलाहलैर् बहिर्लीने, रुद्भिस्त्वपि रुदत्सु च ११५॥
पुंसां स्त्रीणां च बामेषु, दक्षिणेषु च तद्गृहे ।
स्फारबिस्फारघोरेषु, घ्नत्स्विवापघनेष्वपि ॥ ११६ ॥
मृष्टे सिक्ते कुशैः स्तीर्णे, शालग्रामशिलाजुषि ।
गङ्गाम्बुपूर्णपात्रेण, युक्ते सद्वारकाशिले ॥११७॥

बयस्ययेव तस्याश् च, तुलस्या धेनुकेन च ।
बिष्णोर्नामसहस्रस्य, ध्वनिनापिबिराजिते ११८॥

रेजेऽङ्गणेऽवमत्येव, पद्भ्यांयाम्यान्दिशान्निशि।
शयितोद्विज्य निःसृत्य, सादेवीव स्वबास्तुनः ११९

इति कुलककम् ।

गुणैरुर्वी परिक्षिप्ता, सा सुतैः शीलसागरैः ।
चतुर्भिः सप्रियैर् भेजे, हृदा हरिमिवप्रियम् ॥१२०॥

औत्क्रान्तिकेषु दानेषु, दुष्करेष्वपि राजभिः ।
निष्ठितेष्वनुमायैतन्, मतिम् पतिरुपाययौ ॥१२१॥

लज्जावगुण्ठना पत्यौ, मेलकस्थे ऽथ सम्मुखे ।
भूयोऽप्यवाजुगुण्ठत्सा, सिचयेनमुखाम्बुजम् १२२

शुभ्रेण तनुना तच्च, सिचये नावृतम् मुखम् ।
राकेन्दुं शरदभ्राणां, गर्भस्थन् निरभर्त्सयत् ॥१२३॥

पतिराह किमद्यापि, ह्रीः सखी त्वान् नमुञ्चति।
चारित्राचार्यकंबाते, कोनजानातियोषिताम् १२४

साश्रुनेत्रोत्पलेनैवम्, पत्योक्ते तत्रगा जनाः ।
मातर्मातरितिव्यक्त, मत्युच्चैः साश्रु चुक्रुशुः ॥ १२५॥

सिचयान्तरतः पत्युर्, गृह्णती सा मुहुर् मुखम् ।
बभौबिरलमायान्तर्, योगिधीरिवमाधवम् १२६॥

कलापकम् ।

अथसार्थकयन्ती यं, यम्बेत्यादि वचो हरेः ।
पश्यन्तीस्वपतिं तस्य, भावेनैकाग्रदृङ्मनाः १२७
तुलसीदलगर्भास्या, गङ्गाम्बुप्लावितान्तरा ।
सांराविणङ्करेणैव, निवार्यस्तिमिता सती ॥१२८॥
जपन्ती रामरामेति, क्लान्ता ऽपि च शनैः शनैः ।
बीताशेषदशादोषा, शुद्धज्योतिर्मयीव चित् १२९
रेत्युच्चार्यैव सुभगा, ब्रह्म सा समपद्यत ।
मेति तत्कथया सार्द्धं, पुण्यया पर्यशिष्यत॥१३०॥

युग्मकम् ।

सङ्कीर्णबर्षबर्णित्वो, मातृभक्ततमो युवा ।
विदितास्तिक्यवस्तुत्वश्, चन्द्रचारुमणिःसुतः१३१
तस्यादेहम्पितुर्भ्रातुर्, ज्येष्ठस्यानुमतेऽग्निसात्
कृत्वाऽस्थीनिचगङ्गात्रा, बिदधावौर्द्ध्वदैहिकम्१३२

विशेषकम् ।

ततो गर्गान्वयोत्थस्य, भेलौँजीग्रामवासिनः ।
पुत्रं सम्मानदत्तस्य, स्वमातुलसुतस्य तम् ॥ १३३॥
विद्वांसम् मन्त्रशौण्डं च, शुक्लं शीलकुलोर्जितम् ।
आहूयशिवरत्नाख्यम्, प्रतिबिम्बमिवात्मनः।१३४।
प्रातिवेश्यञ्च पाण्डेयं, स रामचरणाभिधम् ।
बुधं रहस्याचचक्षे, रूपनारायणो मुनिः ॥१३५॥

एतत् पुरा मम तु दैवबिदोपदिष्टं
दिष्टं तवोपशरदं निजधर्मपत्न्याः ।
दिष्टाद् भुवीह भविता ऽधिकमित्यतो माम्
बर्षातिथिं ननु युवां स्वगृहेष्ववेतम् ॥ १३६ ॥
इति मतिमतो वक्त्राद् वाचं घनादिवबिद्युतम्
हृदि निपतितां सोढुं शक्तौ न तावतिकातरौ ।
शमयितुमिवोद्वेगं स्वान्ते बहुत्र बिभागतः
कथमपिसुतेभ्योऽस्यब्राह्मीमिमांसमनूदतुः१३७॥
ततः प्रभृति सँस्मरन्नबिरतं त्रिलोकीपतिम्
पठन् दशशतानि सद्विधि तदीयनामान्यपि ।
निबृत्तिबनितासखो मरुमरीचिकाभं जगद्
बिदन्नमृततर्पितः सुरजनीर् जजागारसः॥१३८॥
एकानंशाकृपया यं, हरिबंशा सुतं सुषुवे ।
दत्तादिव हरिदत्ताद्,बुधमूर्द्धमणेःशुभेकाव्ये१३९॥
तेनोमापतिनाम्ना, रचिते नकछेदरामेण ।
नारायणे ऽत्र तुर्यः, सर्गो गार्हस्थ्यगर्भो ऽगात्१४०॥

श्रब्देत्वनूचि धनुरर्घ्यमणि प्रणीय
रोहद्गुणं हिमकरे रुगिषून् मुमुक्षौ ।
यात्रां प्रयागमभि धेनुरिवात्र रूप-
नारायणो प्रववृते ऽथ समांसमीना ॥ १ ॥

या लभ्यते न कुटिलै रभिभूयते वा
कृन्तत्युपार्जितजनुष्कृतदुष्कृतानि ।
एकाश्रयस् सुमनसामपि शर्म्मकर्म
किं किं न कल्पयति कल्पलतेव भौमी ॥ २ ॥

पूर्वं बिधिः फलभरः परतो ऽन्तरे तु
स्वल्पो व्ययः पृथु यशः श्रम आत्मतन्त्रः ।
शस्ताम्बुतीर्थमरुतां भजनं च यस्या
इष्टिस् तनूश् च जननी च कनीयसीच ॥ ३ ॥

पद्भ्यां स एकवृषकृष्टिचलद्धलाभ्याम्
भूमिं स्पृशन् समुदपीपदत श्रियं याम् ।
पत्या व्ययुज्यत न सा ऽन्वभवन् नरश्चो-
विक्षोभमप्यवनिमप्यभिनत्तमां न ॥ ४ ॥

ज्येष्ठे सुते ऽत्युचितकार्य्यधुरां विसृज्य
यान्तं सुदान्तचरितं पितरं निरीक्ष्य ।
प्रेम्णा ऽन्वयाच् चरमसङ्गधिया तदीयं
वाक्यं स्मरन् नविरतं वत चन्द्रचारुः ॥ ५ ॥

श्रीचन्द्रमौलिचरणाम्बुरुहे प्रयत्ना-
दभ्यर्च्य यो गुणगणानवृणीत धीरः ।
श्रीभाग्यवन्मणिरुवाच स तातमेत्य
वद्धाञ्जलिर् यदि मतं सममद्य यानि ॥ ६ ॥

तातस् त्वशान् न शिवराजमणेः सहाय-
भावं विहाय तव यानमिहार्य्यकार्य्यम् ।
यातेष्वहः सु च कियत्सु तदाज्ञयैव
श्राद्धो ऽसि चेत् समुपयास्यसि तर्हि वत्स ॥ ७ ॥

एवं चलन् नियमपूर्वकमार्य्यधुर्य्यः
स स्वप्रयाणकवशादथ पञ्चमे ऽह्नि ।
श्रीरामदेवचरणाम्बुजपातपूता-
मापद्गतापदमसङ्गधनामयोध्याम् ॥ ८ ॥

तद्वासिनं निखिलधर्मकलं सकुल्यम्
बल्लात्करालकलिकालबलानभिज्ञम् ।
सँलापकल्पमतिकोमलमिन्द्रदत्त-
शर्म्माणमाप कमलापतिवल्लभं सः ॥ ९ ॥

हासप्रियो ऽपि च न यो ऽनृतवाग् धनेप्सु-
रन्यार्थमीरितवचा मुरवैरिकीर्त्यै ।
शत्रुर् न यस्य भुवि को ऽपि निसर्गमित्रम्
विश्वस्य यो ऽतिकरुणो ऽतिथये गृहस्थः ॥१०॥

तेनाभिवादितपदः प्रणिपातपूर्व-
माश्लिष्य तं च चिरजीविकया ऽथ तस्मै ।
स्वीयं मनोरथमुदीर्य्य रहस्यभूतं
तेनान्वितः पुनरियेष ततो ऽभिगन्तुम् ॥ ११ ॥

आलोकताथ दशमे ऽह्न्युपगत्य तीर्थ-
राजं स्वगामि जनजालमिवोल्लपन्तम् ।
कल्लोलिनीयुगलचञ्चलशुक्लकाल
भङ्गोल्लसत्कलकलाकुलपालिलास्यम् ॥ १२ ॥
अध्वश्रमक्रमणमन्थरमर्थिसार्थ-
माश्वाह्वयन्तमिव दूरत एव भक्तम् ।
झञ्झानिलोर्मिचपलाञ्चलकेतुपञ्च-
शाखावलीवलनकल्पितसञ्ज्ञयेव ॥ १३ ॥
यं वेद वेद उदितामिततत्प्रशस्तिः
सङ्क्षिप्तसङ्कलितसीमचतुष्टयीकः ।
जागर्तिदोषमपमृज्य च यत्र कल्प-
वल्लीव दुर्लभमनीषितदा ऽऽत्महत्या ॥ १४ ॥
स्वं गामिना मघरजोभि रमून् विहाय
भीत्योत्पतद्भि रवकीर्णतरं विहायः ।
अभ्रंलिहाभि रनिलोच्चलदञ्चलाभिर्
नेनेक्ति यः कलिलकेतनकुञ्चिकाभिः ॥ १५ ॥
यो गङ्गया यमुनयो भयतस् तरङ्गैस्
तैश्च् चामरै रतिसितै रतिमेचकैश् च ।
सम्वीजितो वटमहाविटपातपत्रस्
तीर्थाधिराज्य मविभज्य सदैव भुङ्क्ते ॥ १६ ॥

यः स्वासु सप्तसु पुरीषु बधूषु गृह्णन्
दाक्षिण्यरीतिमितरेतरदूरगासु ।
स्वस्मिन् मृतेभ्य उरुमुक्तिसदाव्रतानि
दातुं समं प्रबिततार बिकुण्ठशक्तिम् ॥ १७ ॥
उत्कीर्णबिष्णुपद उद्यतखड्गयन्त्रे
नूनं कल्पनीतिबिदिते स्वशिरांसि दत्वा ।
इष्टान्युपार्जिजयिषून् बिनिवार्य्य यत्र
यन्त्रं न्यरुद्ध दययैव गुरुण्डराजः ॥ १८ ॥
कुलकम् ।
कैलासभासमिव गैरिकरागराज्या
भिन्नां सनीरनवनीरधरैश्च चित्राम् ।
मूर्तिं बलस्य शबलामिव नीलचेलैः
शङ्कान्तरेवतिमनःश्लियोल्लसन्तीम् ॥ १९ ॥
सिन्दूरपूरपरिपूरितमूर्द्धमध्याङ्
किर्मीरितां मृगमदस्य रुचेव गौरीम् ।
बालार्करश्मिखचितां बनराजिभिश्च च
मिश्रां तटीमिव तुषारधराधरस्य ॥ २० ॥
कीर्णां च कृष्णफणिभि र्मणिभिश्च शोणैस्
तेषां बिभूतिबिशदां च तनूमिवैशीम् ।
ज्यौत्स्नीमिव स्फुटपरिस्फुरलोहिताङ्गा-
मेनीं सुमेरुशितिशृङ्गरुचीभिरुच्चैः ॥ २१ ॥

स्वर्दन्तिनो द्युतिमिवच्छुरितां महेन्द्र-
नीलोपलच्छविभिरञ्चितपद्मकाञ् च ।
मस्यत्तरामिव सितां दरदाङ्कितां च
पत्रीं परां मुररिपो रपबर्गदात्रीम् ॥ २२ ॥
एकामजामिव च लोहितशुक्लकृष्णां
सृष्टिस्थितिप्रलयमप्युपलक्षयन्तीम् ।
क्षोणेस् त्रिवेणिमिव सो ऽथददर्श योगी ।
पुण्यां श्रुतीरितगुणां मसृणां त्रिवेणीम् ॥ २३ ॥
यत्राप्लुतेषु सकलाप्सरसां बिवादो
दिव्यः स्वमोहनफलो न बिनेन्द्रबाक्यम् ।
संस्थाङ्गतेषु हरमाधवबेधसां स्व-
सायुज्यभाक् च विरमत्यदसीयवाञ्छाम् ॥२४॥
यत्रान्तवर्तिनि दिलीपपुरे ऽपि दूरे
पाण्डेयपङ्क्तिकुलमण्डलमण्डनानाम् ।
गेहे ददौ परिणयेन मुनिः स पौत्र्यौ
तत्पुत्रपाणिकृतयज्जलतर्पणेप्सुः ॥ २५ ॥

इति कुलकम् ।

भागीरथीम् भगवतीञ् जननीं निजां द्राक्
साभिज्ञमाप्य मुमुदे स नवीनभीष्मः ।
तुष्टाव तां च पुलकोल्लसितः सहास्रुः
षष्टिर् द्वयं च शारदां वय इत्युदीर्य्य ॥ २६ ॥

अद्याप्युपासिततमे ननु मे दयस्व
क्वानृण्यमस्ति तनये जगति स्वमातुः ।
अङ्के तवात्र पतितः पतितोऽपि सूनुर्
नोचेत् तरेयमिहते ऽनुचितं वत स्यात् ॥ २७ ॥

अग्नेर् न भस्मनि जलस्य हिमे ऽनिलस्य
तार्क्ष्ये गुरोर् बिदुषि पापबिनाकृते ते ।
योगः फलीति कृतपापपरम्परो ऽयन्
न त्वत्परः खलु नरः परिहर्तुमर्हः ॥ २८ ॥

मातस् त्वया न मम मूत्रमलाद्यमेध्य-
मस्पर्श्यपि प्रथमजन्मनि जन्मनीह ।
स्निग्धे ममास्थ्यपि न लालयिताभि चेत् तद्
बन्धैकहेतुरितरेव भवेः कुतो न ॥ २९ ॥

बाल्मीकिना ऽद्यकविना ऽपि दिवि स्ववास-
मेवार्थितात्वमिति बिस्मयते मनो मे ।
किम्मे ऽम्ब धारयसि याम् बटुवर्णिभिक्षां
तां मुक्तिमन्यजननी बितरेद् बराकी ॥ ३० ॥

नारायणाङ्घ्रिनलिने मकरन्दकल्पम्
ब्रह्मद्रवः कमलयोनिकमण्डलौ यत् ।
माला शिवस्य शिरसिस्फुटमालतीनाम्
ब्रह्माद्वयन् दिशतु मे तदिदन् तवाम्भः ॥ ३१ ॥

बह्व्यो वहन्ति सरितः परितः पुनन्ति
पापात्मनो जगति विश्रुतकीर्तयश्च च ।
किन्तु त्वमेव परमुक्तिसखी प्रसूश्च च
तत् कां व्रजानि वद संसृतिपङ्किलोऽहम् ॥ ३२ ॥
अङ्गीकुरु स्वजलतुङ्गतरङ्गभङ्ग-
भङ्गीभिरत्र मयि सङ्गमङ्गलानि ।
उत्सङ्गमङ्गनमवाप्य तवाप्यनङ्गस्
त्वङ्गानि सङ्गरिपुपूरुषपुङ्गवाङ्के ॥ ३३ ॥
त्वं स्वः स्थिता पदमधा भुवि सागराणाङ्
क्षेमाय तत् त्वदनुगा बहवो ऽलभन्त ।
त्वत्सूनुतोन्नतमनाः परमुक्तिमेव
काङ्क्षामि देहि कुरुषे यदि लोकलज्जाम् ॥ ३४ ॥
एवं गृणन् बहु सितासितयोस् तटिन्योः
सम्भेदमध्यमवगाह्य चिराय सस्नौ ।
पूर्वाह्णकं परिसमाप्य विधिं स पर्ण-
कुट्यामुवास मकराद्यदिने ऽनुतीरम् ॥ ३५ ॥
आलोक्य माधवमयम् प्रणिपत्य दण्ड-
प्रह्वो जगाद बहुधा भगवन् प्रसीद ।
मामुद्धरोद्धर भवात् स्वकृतेन तुष्य
सायुज्यमात्मनि विधेहि ममाद्वितीय ॥ ३६ ॥

त्वत्पाव्यतानियमकारि ममास्ति किं न
पातित्यमत्र पतितस्य भवाब्धिभङ्गे ।
किं वा न ते ऽस्ति विदितं वत पावनत्वं
यन् न द्रुतं पतितपावन मां पुनासि ॥ ३७ ॥
क्षेत्रं यथेदमुदितं निगमै रतुल्यम्
पुण्यं तथैव समयो मकरार्कयोगी ।
भक्तो ऽस्मि पात्रमुचितो ऽसि च दानदक्षस्
तद् देहि मह्य ममृतं विफलो विलम्बः ॥ ३८ ॥
शुश्रूषसे किमिति काकुगिरं दयाब्धे,
साक्षात्कृताखिल, विचारयसीह किं वा ।
विश्वेश कं न्ववलिलम्बिषसे सहायं
किं सत्यसङ्गर च मत् स्वजनादुदास्से ॥ ३९ ॥
वस्तुस्थितिस् त्वियमुदेति ममैव दोषा-
च्छङ्का न ते विमल मन्तुमिमङ् क्षमस्व ।
जल्पाम्यनल्पमिह यत् खलु याचकानां
वाचश् च्यवन्त इति सर्वजनप्रसिद्धम् ॥ ४० ॥
अग्न्यर्कशक्रपवनान्तकृतस् त्वदेते
बिभ्यत्वहं तु न बिभेमि यतो ऽस्मि भक्तः ।
प्रह्लाद उच्चसति लेखकुले नृसिंहात्
त्वत् किं बिभाय तत एवमुदाहरामि ॥ ४१ ॥

यो ऽज्ञो हि निर्गुणमथो गुणिनं स विज्ञः
संसेवते नच परं प्रति हेतुराद्यम् ।
स्यात् सेवनं त्वयि तु तद् बिपरीतमेव
कुर्य्यां किमत्र जगदीश बिना ऽनुवृत्तिम् ॥ ४२ ॥

मुक्तिस् त्वमेव न परं त्वदुपासको ऽहङ्
किं न त्वमित्य बितथं वचनात् तवैव ।
अध्यासधीश् च सुतरां न्यवृतन् ममैव-
मप्यर्थये त्वमिव यत् त्वमिदङ्गुणो ऽसि ॥ ४३ ॥

अत्रान्तरे तदनुवृत्तिपरायणस् त-
दाज्ञानुसारिसमयेन समागमत् सः ।
श्रीभाग्यवन्मणिरपि प्रथयन् स्वभक्तिं
तीर्थेश्वरे ऽपि च पितर्यपि तुल्यरूपाम् ॥ ४४ ॥

त्रिःस्नायिनो मुनिबरस्य कियन्त्यहानि
तत्रोषुषो ब्रतबिशेषमुपेयुषश्च ।
तस्यान्तरन्तरुदभूद् विषमो ज्वराग्निर्
गङ्गाजलोर्जिततनुर् बडवानलाभः ॥ ४५ ॥

भक्त्या ऽधिगङ्गमधिकाधिकया जहौ न
स्नानं ज्वरे ऽपि स निजैर् बिनिबारितो ऽपि ।
माहेश्वरो ज्वरशिशुः पयसा जनन्यास्
तस्मिंस् ततो ऽनुदिन मैधत रन्ध्रमाप्य ॥ ४६ ॥

तीर्थाधिपातिथिमिलत्तदनेकदेश्य-
वृन्दं परिक्षिपदिमं सुधियां बभासे ।
क्षेत्रे कुरोर् ऋषिमहीपतिमण्डलं तम्
भीष्मं युधिष्ठिरनृपागमनात् पुरेव ॥ ४७ ॥

एतच्च वृत्तमुपधार्य समाजगाम
तत्राशु पङ्क्तिकुलभूषणशब्दशाली ।
नाथान्वयाम्बुधिविधुः प्रथितस् त्रिपाठी
स्नातुं गतः सुबिबुधो भवनाथशर्मा ॥ ४८ ॥

यश् चेतियाधिपबुधोत्तमपुण्यकीर्ति-
शत्रुघ्ननाथसुकृतप्रथमावतारः ।
जागर्ति सम्प्रति ममापि मुदां निधानं
तस्य प्रियः सततसूनृतवाङ् महेच्छः ॥ ४९ ॥

दृष्ट्वा बहिःशिविरमेव स चन्द्रचारुं
नत्वा पितृव्य मथ तस्य शुभाशिषेद्धः ।
उक्तश् च वृत्तमुपवर्ण्य बिभेमि तातात्
तत् त्वं निषेध सवनादिममित्युपेत्य ॥ ५० ॥

पस्पर्श पादयुगलं च करेण रूप-
नारायणस्य कुलतः स्वपितामहस्य
गीर्वाणवर्यवरवाक्यसहोदरास् तास् ।
तस्याशिषः समुपगम्य जगाद नम्रः ॥ ५१ ॥

किञ्चिद् वदामि यदि विष्णुसहस्रनाम-
पारायणव्रतमिदं विरमेन् मुहूर्त्तम् ।
सौख्यं तितांसुरधुना भवतां यदुक्तं
डिम्भस्य दुर्बिलसितानि मुदे गुरूणाम् ॥५२॥

रुग्णं शयानमपि तीर्थवरे जरन्तम्
विष्वग् वृतं नरवरै रभिमाधवाङ्घ्रि ।
दृष्ट्वा पितामह मशेषविदं भवन्तन्
धर्मात्मजायितुमलं वलते मनो मे ॥ ५३ ॥

विप्रोत्तमा निगममर्मविमर्शदक्षाश्
चारित्रचुञ्चव उदञ्चितपुण्यपुञ्जाः ।
धर्मस्य मूर्तयइवात्र भवादृशाश् चेत्
कुर्युः प्रतीप मशरण्य मिदं तथाहि ॥ ५४ ॥

सन्ध्यात्रयस्य यदि वार्भिरुपासनेव
स्नानं तदा ऽप्यशुचितेव भवेज् ज्वरो ऽयम् ।
तत्राधिकारविरहो ऽनधिकारिणश् च
कर्मानुतिष्ठत उपैत्यघमेव नान्यत् ॥ ५५ ॥

वैगुण्यमत्र परिदृश्यतएव किञ्च
दोषप्रकोपण मपि प्रथितं जगत्सु ।
के स्नान्ति वा भुवि बुधा ज्वरिणः कदापि
देहो हि धर्मशरणं न निहन्तुमर्हः ॥ ५६ ॥

आरोग्यशक्तिरथचेत् सुरसाविनीस्या-
दस्तु ज्वरोपजनशक्तिरपि स्फुटेयम् ।
दृष्टां तु शक्तिमनपेक्ष्य बिबेक्यदृष्टाङ्
को वा ऽऽश्रयीत बिपरीततरां च तस्याः ॥५७॥

भक्तेषु चेत् सुरसरिन् निजदृष्टशक्ति-
माक्षिप्य शक्तिमपराम् प्रहिणोति तर्हि
स्वर्गापवर्गजननीं समपोह्य शक्तिन्
नैरुज्यमेव बिसिनोति न मानमत्र ॥ ५८ ॥

नैमित्तिकं यदि भवे दथवैककाम्यन्
त्रिस्रोतसीह सवनं सुतरान् द्विधा ऽपि
नाधिक्रियाबिरहिणा ऽऽचरणीयमेतद्
रोगातुराश्च च न नरा अधिकारिणः स्युः ॥ ५९ ॥

श्रेष्ठश्च च नापकुरुते बिचलन् स्वधर्मात्
स्वस्यैव किन्तु जगतां स निदर्शनं हि ।
ख्यातं हि मेषसमजं निपतन् स्वमोहात्
कूपे निपातयति साक्षिणमग्रमेषः ॥ ६० ॥

तस्माज् ज्वरार्त्तसवनं जनकं सदात्म-
घातांहसो न कथमप्युचितं बिचारे ।
सन्त्यज्य जाग्रुचयसेवनमेवरम्यम्
पथ्योपचारसहितं सपदीह युक्तम् ॥ ६१

श्रुत्वैतदभ्यधित स स्मयमान एव
मीमांसया ऽध्यवसितां ध्वनिभिः पिनद्धाम् ।
सङ्क्षिप्तसारसरसां च सुसँस्कृतां च
तृप्यापि पौत्र न गिरं तव साधु शृण्वन् ॥ ६२ ॥

तर्कों ऽत्र कर्कशतरः प्रसितः प्रसादो
वादो ऽपि सङ्गतिसखः पणितप्रमाणः ।
वत्सास्मदन्वयजनैरुचिता तवैव
वाणीयमेतदुपकर्णय यद् भणामि ॥ ६३ ॥

नित्यं स्वरूपत इहागमनानुरोधान्
नैमित्तिकं फलवलाच्च सदैव काम्यम् ।
स्नानं सितासितसरिद्युगसङ्गतौ मे
रोगातुरत्वमपि नास्ति कियान् ज्वरस्तु ॥ ६४ ॥

आरब्धमासिकनिवासमहाव्रते ऽङ्ग
स्नानस्य हानमिह भोजनवत् पराके ।
पापं वहेद् बिनशनन्तु तनोर् महार्थन्
त्याज्यो न धर्म इह देहबिघातभीतेः ॥ ६५ ॥

व्यज्ञायि जह्नुभुवि शक्तिचतुष्टयं यत्
प्रातीपिकी तवमते ऽपि च तत्र शक्तिः ।
एकैव सा यदि ततो बिनिबर्तयित्री
तर्ह्यास्तिकत्वतरुरेव बिलूनमूलः ॥ ६६ ॥

अब्दैवतेन मनुना ऽप्यथ भस्मना बा
कल्पेन साध्यसवनस्य कथं ज्वरे ऽपि ।
स्नानं जले रुचित मित्यपि जह्नुजायां
स्नानम् व्रतस्य बिषयं न निरूप्य शङ्का ॥ ६७ ॥
स्नानं निषिद्धमपि यज् ज्वरिणो व्रता त्त-
दन्यत्र तद् यदपि केवलमर्थशास्त्रे ।
तद् बाध्यते सुबलिभिर् बहुभिश् च शास्त्रैर्
यद् धर्ममार्मिकसुवृद्धबुधावधेयम् ॥ ६८ ॥
स्वस्यापि हिंसनमथाभ्युपगम्य वच्मि
तीर्थेश्वरे ऽत्र न मनागपि तत् कपूयम् ।
बैधं यतो यदि तथाऽपि भवेत् तथा तत्
तर्हि व्रतान्यपि पराकमुखानि कानि ॥ ६९ ॥
संसेव्यते च बहुधौषधजातमेतत्
पथ्यं च साध्वसवनेन बिना मयाऽपि ।
तन्वा न तन्वपि परं समवैमि कार्यन्
धर्मादहं तदबिरोधि तु यद् भवेत् तत् ॥ ७० ॥
यत् पाञ्चभौतिकमिदं तदनित्यमेव
कार्यं च नार्यरमणीय मिहावशिष्टम् ।
देहावसानदिननिर्णय एष बिष्णोर्
भक्तिं बिना न सुलभो ऽस्ति महोपकारी ॥ ७१ ॥

सा मे सतीकुल मशेष मलङ्करिष्णुः
पत्नी श्रुतिस्मृतिबिनिश्चितयोगिगत्या ।
सायुज्य मच्युतपदे ऽगमदित्ययं मे
मोदो न माति मनसीत्यपि बन्धभङ्गः ॥ १२ ॥

पुत्रेषु सासहिषु कार्यधुरां निधाय
सर्बं बिहाय हृदयेन बिहीनपूर्बम् ।
नक्तन्दिवं ननु पिवाम्यरबिन्दनेत्र-
पादारबिन्दमकरन्दममन्दभक्त्या ॥ १३ ॥

स्वल्पावशिष्ट मिम मस्य कलेवरस्य
क्षान्तस्य कालमनुपाल्य दिने ऽनुकूले
नारायणस्य चरणे शरणे प्रगृह्णन्
हातास्मि जन्यमिदमत्र तु तीर्थनाथे ॥ १४ ॥

एवं ब्रतान्यनुभवन्ति जगन्ति सन्ति
सन्तूचितान्यपि चितानि न धिक्कृतानि ।
इत्यर्थये सततमेव हरेरिषाण
त्वञ्चैवमेव चिरजीवक शाधि चान्यान् ॥ १५ ॥

बेदाम्बुधेर् मननमन्दरमन्थनेन
लब्धां सुधां तदुपदेशबिधां धयन्ती ।
सा भूरिभूसुरसभा भवनाथमुख्या
तृप्तोज्जगार बिबुधाधिपते जयेति ॥ १६ ॥

ते तं प्रणम्य मृदु वाङ्मुखमेव तस्य
शंसन्त एव च मुहुर्मुहु रध्वमध्ये ।
सो ऽपि प्रहृष्टहृदयो भवनाथशर्म्मा
तल्लग्नमग्नमनसः शिबिराणि भेजुः ॥ ७७ ॥

भूयो ऽपि पूर्बवदसौ बिधि माचचार
स्नानादिकं न हि ततो ऽस्य मनश् चचाल ।
रत्नार्चिषो हि पवनेन जलेन बा ऽपि
सामान्यशुष्मणइवाभिभवः क्व दृष्टः ॥ ७८ ॥

तं भाग्यवन्मणि मवोच दथर्षिबर्य्यः
कार्य्यं कुरुष्व शिवराजमणेस् त्वमेव ।
स त्वीशपादकमले भजतामजस्रं
साहाय्य माचर तथैव च चन्द्रचारोः ॥ ७९ ॥

ग्रामे लघावथ सुबर्णपुरे मया यन्
निर्मापितं रघुपतेः खलु मन्दिराग्र्यम् ।
संस्थापितश् च भगवानथ सन्निधाये
शिष्टम् मदिष्टमुररीकुरु च स्वनाम्ना ॥ ८० ॥

द्वाराङ्गणे रचय मञ्जुलपुष्पबाटीं
तत्रालयं शिशुनिशेश्वरशेखरस्य ।
संरक्षणाय च तयोर् बिनियुङ्क्ष्व भूमि-
माभूत सम्प्लवमिदं प्रथतां यशो यत् ॥ ८१ ॥

विद्वांसमास्तिककुलीनसदेष्ययदान्त-
माचारचुञ्चु मपि पूजकमत्र बिप्रम् ।
मद्वंशशाक्यबिनिमान मलोभदम्भङ्
कौटुम्बिकं शिवपदाब्जरतं नियुञ्ज्याः ॥ ८२ ॥
आरामकूपसहितामपि धर्म्मशालां
ग्रामे शुभे खखड़िहाभिध आतनुष्व ।
आत्माग्रजानुपचरोपचरात्मशक्त्या
ते मत्समा निगमतो हि मताः प्रति त्वाम्॥८३॥
मातुर् ममापि च तथा ऽत्मसहोदराणां
नाम्ना ऽत्मनश्च च न चिरादिव चेन्द्रवारे ।
आरोपयेर् बिधिवदच्छभुवं महान्त-
माराम मत्र चतुरो ऽसि तथा क्षमो ऽसि ॥८४॥
एवं समादिश दसावथ चन्द्रचारं
त्वङ् खानयेर् ह्रदमगाध मनम्बुदेशे ।
नाम्ना ममोपपथमे तदपीप्सितं मे
पूर्वं तथेति च सुतौ तमभाषिषाताम् ॥ ८५ ॥
भूस् तत्र तत्र बिधिवत् प्रबिभज्य बिप्र-
सात् कृत्य नाभिलिखिता ऽद्य मया ऽस्ति या या ।
पत्रे ऽभिलिख्य नृपतेश्च च कुले प्रमाणी-
कृत्यैव तां भवतु वो मनसाम् प्रमोदः ॥ ८६ ॥

पूर्वं मयैव लिखितं हि निबन्धपत्र-
मृक्थव्यवस्थितिरियं बिहिता च सा वः ।
सत्यापितं नृपकुले न तदित्यतो वः
पुत्रान् प्रशास्मि शृणुतं निपुणं तथाहि ॥८७॥

तल्लेखभाव मनुरुध्य समैः समेतैर्
युष्माभि रन्य दभिलिख्य निबन्धपत्रम् ।
सत्यापनीय मधिराजसभं स इत्य-
मप्यादिशत् तदपि तौ द्रुतमङ्ग्यकार्ष्टाम् ८८

मायागुणाइव ततश्च चुकुपुस् त्रयो ऽस्य
दोषाः शरीरबिषया अथ सन्निपत्य ।
आरेभिरे ज्वर मगोचर मौषधानाम्
बैधी बिधा ऽभ्युपदधीत फलं न कस्मात् ॥ ८९ ॥

अस्याददीमहि निजाननवद्यदायान्
देहस्य साधु बिदधीमहि तैर् बिधेयान् ।
इत्याधिभौतिकसुरा जहषुश्च च पञ्च
दाधीचमस्थ्यपि सुरैर् हि पुरा ऽभ्ययाचि ॥ ९० ॥

दायांश्च च तस्य तनुजेषु सुहृत्सु धर्म्मान्
दृष्ट्वा तदा जिगमिषून् वृजिनान्यनाप्य ।
व्याप्तिप्रियोपनिषदायतिविन् नुपाप
कृत्यं द्विषन्त इति मन्दमुवाच पश्चात् ॥ ९१ ॥

नद्योस् तदा खलु सितासितयोर् जनौघै-
रोघौघि युद्ध मिद मङ्गतषो रवैत्ति ।
भागाद् बलाच्च सितया बिनिपीड्य यत्र
भग्ना ऽसिता लघु पलाय्य जगाम दुर्गम्॥ ९२ ॥

चन्द्रः कलावलनया बिकलो ऽपि तत्तु-
सङ्कल्पकल्पिनि मनस्यधिकोत्सुकः सन् ।
प्राचीं करै रुणाय नुदगात् तदानीम्
पुण्याय कः स्पृहयते न पुमान् कलङ्की॥ ९३ ॥

इन्दूदये सुरसरित् प्रतिबिम्बचन्द्रान्
बीचीचलान् स्वजठरेषु परःसहस्रान् ।
सन्दर्य्य सिन्धुपतये ऽस्य बिनैव पर्व
तेने प्रमोदगुरुतुङ्गतरङ्गसङ्गान् ॥ ९४ ॥

अस्तं व्रजन्नपि रबिर् वत तत् समस्त-
पुस्तावलोकनबिलोचनयुग्मलोलः ।
अध्यग्न्यतिष्ठिपदिहैव मयूखलेखा-
ब्याजेन पिङ्गल मपेत्य निजान्तरङ्गम्॥ ९५ ॥

एवं सुरा निजतदीयहृषीकभेद-
भङ्गाभया मुमुदिरे मुहुरात्तलोभाः ।
आनृण्यपुत्रलयहर्षबिषाददोला-
लोलाभया त्रिपथगा बिचचालचालम्॥ ९६ ॥

औत्क्रान्तिकानि सुबहूनि महाधनानि
दानानि तत्र स बिधाय तदा ऽतिदध्यौ ।
ओङ्कारपूर्बक मशेषबिशेषशून्यम्
ब्रह्माद्वयं स्वमुचितोचितमाशु योगी ॥ ९७ ॥
अङ्गाब्धिनन्दबिधुसम्मितबिक्रमाब्दे
माघे शुभे शुदि तृतीयतिथा वथासौ ।
चेलं चिरन्तमिव जन्यमिहापहाय
ब्रह्माद्वितीयमनघं समपादि बिप्रः ॥ ९८ ॥
आत्माग्रजस्य शिवराजमणे रनुज्ञा-
माप्यौर्द्ध दैहिक ममुष्य तु चन्द्रचारुः ।
कृत्यं समाप्य स सितासितसङ्गमे स्वान्
यास्यन् गृहानिदमवोचदपि प्रयागम् ॥ ९९ ॥
तीर्थेश्वरो ऽसि बिबुधै रपि पूरितो ऽसि
भूलोकभूषण मसि प्रियदर्शनो ऽसि ।
अभ्यर्थये बहुनिपत्य भुवीह शेषे
त्वं मद्गुरोरिव ममापि हृदादयेथाः ॥ १०० ॥
प्रायाणिकं बर मिमं च वृणे त्वदेकं
त्वद्दर्शनं प्रतिसमं बिधिवल् लभेय ।
त्वच्चिन्तनं त्वहरहः खलु मे ऽन्तरन्तर्
नैसर्गिकं तव कृपा कलितं चकास्ति ॥ १०१ ॥

आराधयन्ति सततं बिधिवन् महान्तो
यां साऽपि जह्नुतनया रविनन्दना च ।
त्वां सेवते हरि मिवानिश मित्यवाच्यं
श्येनादिवत् सद्गशता हि बिभेदगर्भा ॥ १०२ ॥

दातार माप्य परमुक्तिमुखानि कस् त्वाम्
भिक्षेत भक्ति मपहाय सहाय शून्यः ।
को बा स्तुवीत गुरु रप्यनिरुक्तिमुख्यं
श्रीहर्षखण्डन मिवातिमनोहरञ्च ॥ १०३ ॥

तापत्रयोपशमनं शमनं निवार्य
किं त्वां वृणीय शमनन् तमपेक्षमाणः ।
तद् ह्यामनन्ति कुशलास् तव भक्ति वात्या
शुष्कच्छदायित महो किमतो महत्त्वम् ॥ १०४ ॥

अन्तः पुरेषु बिचरन् भवता मयोध्या-
पूर्बेषु भाग्यवशतो भवदङ्कलोठी ।
अप्रौढवाक् चपलदृग् रहितः पितृभ्याम्
बालो ऽह मद्य भवता मनुकम्पनीयः ॥ १०५ ॥

निखिलपतनहेतून् पञ्च चञ्चत्प्रपञ्चान्
बहुल मुपशमय्य ध्वान्तसङ्घा निवार्कः ।
मम भवभवभीतिच्छित्तये वित्तये च
स्फुट मनुभवतु द्राक्स्वं भवान् भावमद्या ॥ १०६ ॥

इति स रचयन्नत्वानत्वास्तुतिं बहुधा सुधीः
सपुलकतनुः साश्रुस् तीर्थाधिपस्य कृते तदा ।
गुरु बिरसजं शोकम् बिभ्रत् कथङ् कथ मप्यमुं
स्वगृहमगमत्सार्द्धंस्वीयैःसमृद्धवसुन्धरम्१०७॥

चकास्तिगोरक्षपुरादवाच्यां
दिग्भिद्वयं योजनयो रतीत्य ।
ग्रामः प्रसिद्धः सहुआभिधो य-
मध्यासते गौतमगोत्रबिप्राः ॥ १०८ ॥

बली द्विवेदो ऽस्य च रामभद्रस्
तस्मान् निहालः समभूत् ततो ऽपि ।
विद्वद्वरः कुञ्जरनामधेयस्
ततो ऽनिरुद्धो निगमेष्वरुद्धः ॥ १०९ ॥

तस्मादभूवँस् त्रय एष गङ्गा-
दत्तो ऽग्रजः श्रीसुखलालदत्तः ।
मध्यः कृतीन्द्रः सममानि यो ऽसौ
नेपालभूपालमुखैर् नृपालैः ॥ ११० ॥

मुनिस् तु नारायणदत्तशर्मा
कनिष्ठ एषामपि सन्ति बंश्याः ।
सम्प्रत्यपीमे नितरा मधर्म्माद्
भीता न धर्मं जहतीति सत्यम् ॥ १११ ॥

बेणीमाधवशर्म्मा, प्रयागदत्तश्च तेषु तनयौ द्वौ
समजनिषातांनारा, यणदत्ताद्वैष्णवप्रबरात् ११२
अधिकाध्ययत्याक्तां ता, वन्तेस्वतनूतनूनपात्सदृशौ
अनयोर्यवीयसोऽतः, किञ्चित्सम्बर्णयेवृत्तम् ११३
श्रीमान् प्रयागदत्तः, कूर्म्माचलवासिनः पन्तात् ।
बेदाङ्गस्मृतिशास्त्रेष्वधीतिनःपण्डितप्रबरात् ११४
श्रीमद्धरणीधरतो, गोरक्षपुरे समागतादनिशम् ।
बेदान्स्मृतीस्तथाऽङ्गा, न्यपिशास्त्राण्यञ्जसायधीत्य११५।
तत्रापि च त्रिभूमं, सौधं निर्माप्य नैकसङ्ख्याकान्ग्रामान्
धर्मादुपार्ज्यकीर्तिं, जगत्यसौ सन्ततानस्वाम् ११६
तस्मात् तुलसीरामो, हरिदत्तः कृष्णदत्तश्च ।
वाचस्पतिरथसोमे, श्वरश्चासन्नेमनादेव्याम्११७
सर्वे चेमे बिद्या, बिशारदाःशीलशालिनःप्रथिताः
बहुधनधान्याः पुत्रैः, पौत्रैश्चयुताश्चशोभन्त११८
पतिमन्वगाच्च काश्या,मेषांमाताऽथ नाकमारुक्षत्
वाचस्पतिरथतुलसी, रामोऽलब्धाग्रजोऽयोध्याम्

॥ युग्मकम् ॥

अवशिष्टाःसाम्प्रतमपि,त्रयएष्वेतेबुधाध्रियन्तेये
तेषांमध्येज्येष्ठाद्,बिबुधेन्द्रादेवजन्मबिद्याश्च ॥१२०॥
प्राप्योमापतिशर्मा,नकछेदेत्यन्यनामकोऽहमपि
हरिबंशायदुबंशा,तिलराज्ञीः सन्नुवे मातृः ॥१२१॥

निर्मायनागेशकृतेऽथशब्द-
शास्त्रानुगे शेखरयोर् द्वये ऽहम् ।
व्याख्ये जटाख्ये नवतर्कसख्या-
बध्यापिपच् छात्रगणाननेकान् ॥ १२२ ॥

ताता ऽचीकमताथ सप्ततितमे वर्षे स्वदेहानुगे
ऽयोध्यायां निजवासमन्तिमवयोन्याय्यं तदिच्छामनु
मिश्रोविप्रवरस् तु रामशरणोमह्यं स्ववेश्मादद्दात्
साकेतस्यमिदं स्वयं यदधुना नव्यं च भव्यं च सत् ।१२३।

यो ऽध्यास्ते खलु धेनुसेति विदितं ग्रामं वदान्यग्रणीर्
बस्तीमण्डलकान्तरालबिलसद्बांसीतिखण्डस्थितम् ।
अस्माभिश् चवियोगभीरुभिरथस्वीयैर् वृतो नव्यतो-
ऽप्यात्मीयाद्भवनान्मदीयजनकोऽयोध्यांपराय्यागमत्

अथा ध्ययोध्यंनिवसन् स्वदायान्
मिश्राच्चनिर्वृत्तशरीरयात्रः ।
पादौजुषाणोजगदीश्वरस्य
पितुश् च नित्यं चरितार्थजन्मा ॥ १२५ ॥

नृपस्य साकेतपतेः सुशर्म्मणः
प्रतापनारायणसिंहशर्मणः
तलेकरस्वस्तरुपल्लवस्य शं
लभे मिलत्कोमलशीलशीतले ॥ १२६ ॥

सुधीरबीरद्विजपुङ्गवस्य
शिवाङ्घ्रिपद्मैकमधुव्रतस्य ।
कपोलपालीपुलकावलीभिर्
लपन्ति लेख्यो ऽपि च यस्य कीर्तीः ॥ १२७ ॥

श्यामो ऽभिरामः शतपत्रनेत्रो
भूतित्रिपुण्ड्रोल्लसितालिकश्रीः
उपास्यते कामयमानयेव
यो ऽयोध्यया रामबियोगभङ्गम् ॥ १२८ ॥

कदा नु बेदार्थबिचारचातुरी
तुरीयकक्ष्या मधिशय्य जृम्भिता ।
स्थितं मुदा काश्यमरापगान्तरे
परेप्सिता मां चरितार्थयिष्यति ॥ १२९ ॥

कदा नु मे काश्यपसर्बतोमुख-
प्रणालिकाया मपि पातमात्रतः ।
स्यु रञ्जसा ऽस्थीनि न लौकिकान्यहो
अहो दधीचेरिव शङ्कराज्ञया ॥ १३० ॥

इतीव शेषं स्वमनोरथाम्बुधेः
परात् परं पारमहर्निशंस्पृशत् ।
ममान्तरं शङ्करकिङ्करं करे
कृतं तदभ्यूहति बासनावशात् ॥ १३१ ॥

काव्यंस्वपूपुरमिदं बिरचय्य नेत्र
बाणाङ्कचन्द्रमितबैक्रमबर्षमाघे ।
शुक्ले फणीश्वरतिथौ स्खलितानि चेह
बाढं बिगाह्य सुधियः परिशोधयन्तु ॥ १३२ ॥

नृणां जीवनबर्णनेषु रचितेष्वद्यानवद्यैर् बुधैर् ।
द्रष्टॄणांसमवेत्यनिष्फलतयोपेक्षांमयेहादरात्
बिश्वेशामरबाहिनीगयशिरस्तीर्थेश्वराद्याः श्रिताः ।
प्रायोभावचुराफलेनचबिनानोबिस्तरोऽकारिबा १३३

नवीनं नीचीनं भवतु च समीचीन मथवा
भवद्भिः काव्यं मे सकल मवलोक्यं हृदयतः ।
इतीडित्वा याचे सुमृदु भवतस् तत्रभवतस्
तदेतन् मह्यं सम्प्रददतु कुशाग्रीयधिषणाः॥१३४॥

एकानंशाकृपया यं, हरिबंशा सुतं सुषुवे ।
दत्तादिवहरिदत्ताद्, बुधमूर्द्धमणेः शुभेकाव्ये१३५।
तेनोमापतिनाम्ना, रचितेनकछेदरामेण ।
नारायणेऽत्रपञ्चमरे नृनिष्ठाऽधिष्ठितःसर्गः॥१३६॥



